* ओ३म् *

श्रीकांगड़ीगुरुकुलविश्वविद्यालयगीर्वाणवाणीग्रन्थमाला—

# साहित्य सुधासंग्रहः

## तृतीय बिन्दुः

गुरुकुलाऽऽचार्यमहोदयस्याऽऽदेशात्

बिजनौरमंडलान्तर्गतहल्दौरग्रामवास्तव्येन

श्रीभवानीप्रसादेन

गुरुकुलसाहित्याध्यापकेन

श्रीवागीश्वर विद्यालङ्कारेण च

संगृहीतः

१९८३ श्रीवैक्रमाब्दे
१०२ श्रीमद्दयानन्दाब्दे

मूल्यम्
१।) रु० मात्रम्

* ओ३म् *

# * साहित्य सुधा संग्रहस्य *

## तृतीय बिन्दोर्भूमिका



**अयिसतत सुरभारतीहितनिहितमतयः सहृदय महोदयाः !**

अद्य हि करुणावरुणालयस्य जगदीशितुः परमपितुः निरवग्रहाऽनुग्रहेण श्रीमतां करकमलयो रुपहारी क्रियतेऽयं तृतीयो बिन्दुः । अस्मिन्हि—पौरुषेयैरप्यपौरुषेयैः महतो भूतस्यनिःश्वसितभूतै रपि श्रुतिमयैः वेदमन्त्रै रुपक्रम्य गीर्वाणगिरः प्रथितयशसां कतिपयप्रधानमहाकवीनां दृश्यकाव्येभ्यः प्रकृष्टतमास्ते तेंऽशाः संगृहीता यै रस्य बिन्दो रुपादेयता मार्मिकाणां सर्वसम्मता स्यात् । कालिदासभवभूती हि संस्कृतसाहित्यनभसः सूर्याचन्द्रमसा विति निर्विवादम् । तत्र च श्रीकालिदासस्य शाकुन्तलकथानकं प्रायः कवेरक्षरै रेव चम्पूस्वरूपे निवेश्य प्रथमबिन्दौ विन्यस्तम् । अधुना च "उत्तरे रामचरिते भवभूति र्विशिष्यते" इत्युक्त्यनुसारं संस्कृत साहित्यस्य समुज्ज्वलतमरत्नं भवभूतिप्रणीतं उत्तररामचरितं इह प्रायः साकल्येनैवसंगृहीतम् । यतोहि कस्याप्येकस्याविकलस्यनाटकस्य पठनमन्तरेण नाटकानां सौन्दर्यं सम्यगनु भवितुं न शक्यते । उत्तररामचरितस्य तृतीयाङ्कगताः केचनांऽशाः कवेः सर्वस्वभूता अपि नववयस्कविद्यार्थिनां कृते ऽतिगम्भीरत्वादनुपयुक्तत्वाच्च परित्यक्ताः । सर्वत्रैव च प्राकृतभाषामयानंशान् विहाय तेषां संस्कृता ऽनुवाद एव स्वीकृतः । अस्मिन्हि संगृहीतांऽशाः कवीनां कालक्रमेण न निहिताः । अपितु मुद्रणे शीघ्रतावशा द्विशिष्टक्रमस्य भङ्ग एव जातः ।

भवभूतिकविताविषये किमपि कथनं दीपेन सूर्यस्य प्रकाशनमिवेति कृतं तत्रवचनव्ययेन । अपरेऽपि जयदेव मुरारि शूद्रकादयः कविमूर्धन्या भारतस्य गौरवहेतव एव । तेषां नाटकेभ्यः प्रसन्नराघव, मुद्राराक्षस ऽनर्घराघव भर्तृहरि निर्वेद, प्रबोध चन्द्रोदय, मृच्छकटिक प्रभृतिभ्योऽपि समुपात्ता लघवोंऽशा उत्कृष्टकवित्वद्योतका मनोरञ्जकाः शिक्षा प्रदाश्च सन्ति ।

निर्दिष्टकवीनां, तत्कवितायाश्च विषये किंचित्प्रतिपादनं प्राप्तावसर मपि विस्तरभिया, अन्यत्र करिष्यमाणत्वाच्च नाऽत्रक्रियते। अन्ते च सहजसौजन्यधन्या-मान्याः समभ्यर्थ्यन्ते यदस्मदीयमति दोषेण, शीघ्रतावशेन, यन्त्रालय प्रमादेन च जातान्यत्र स्खलितानि, तानि चन्तव्यानि प्रेक्षावद्भिः श्रीमद्भिरिति।

श्रीमता माश्रवौ

श्री भवानी प्रसादः

श्री वागीश्वरश्च

गुरुकुल काँगड़ी
श्रीशिवरात्री चतुर्दश्याम्
संवत् १९८३ वैक्र०

# अनुक्रमणिका

इति अनुक्रमणिका



## * नाटकप्रयोजनम् *

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृत व्यतिकरे स्वाङ्गे विभक्तं द्विधा ।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम् ॥

( श्रीकालिदासस्य )

ओ३म्

# साहित्य-सुधा-संग्रहः

## तृतीयो बिन्दुः

तेजोऽसि तेजो मयि धेहि ।
वीर्यमसि वीर्यं मयि धेहि ॥
बलमसि बलं मयि धेहि ।
ओजोऽस्योजो मयि धेहि ॥
मन्युरसि मन्युं मयि धेहि ।
सहोऽसि सहो मयि धेहि ॥

यजु० १९ । ९

## * शिवसङ्कल्प प्रार्थना *

यज्जाग्रतो दूरमुदैति दैवं,
तदु सुप्तस्य तथैवैति ।
दूरङ्गमं ज्योतिषां ज्योतिरेकं
तन्मे मनः शिवसङ्कल्पमस्तु ॥ १ ॥
येन कर्माण्यपसो मनीषिणो-
यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां
तन्मे मनः शिवसङ्कल्पमस्तु ॥ २ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च
यज्ज्योतिरन्तरमृतम्प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म क्रियते
तन्मे मनः शिवसंकल्पमस्तु ॥ ३ ॥
येनेदं भूतं भुवनं भविष्यत्
परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्त होता
तन्मे मनः शिवसंकल्पमस्तु ॥ ४ ॥
यस्मिन्नृचः साम यजूंषि यस्मिन्
प्रतिष्ठिता रथानाभाविवाराः ।
यस्मिँश्चित्तं सर्वमोतं प्रजानां
तन्मे मनः शिवसंकल्पमस्तु ॥ ५ ॥
सुषारथिरश्वानिव यन्मनुष्यान्
नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं
तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥

यजु० ३६ अध्यायः ।

## * कस्मै देवाय हविषा विधेम *

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
ऋ. १० । १२१ । १ ॥

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य च्छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥
ऋ. १० । १२१ । २ ॥

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥
ऋ. १० । १२१ । ३ ॥

यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाऽऽहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥
ऋ. १० । १२१ । ४ ॥

येन द्यौ रुग्रा पृथिवी च दृढ़ा येन स्वःस्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥
ऋ. १० । १२१ । ५ ॥

यं क्रंदसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राऽधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥
ऋ. १० । १२१ । ६ ॥

आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्ततासुरेकः कस्मैदेवाय हविषा विधेम ॥
ऋ. १० । १२१ । ७ ॥

यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम ॥
ऋ. १० । १२१ । ८ ॥

मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥

ऋ. १० । १२१ । ६ ॥

प्रजापते ! न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥

ऋ. १० । १२१ । १० ॥

यस्य द्यौरुर्वी पृथिवी च मही यस्याद उर्वन्तरिक्षम् ।
यस्यासौ सूरो विततो महित्वा कस्मै देवाय हविषा विधेम ॥

अ० ४ । २ । ४ ॥

---

## * सर्वमेधाऽध्याय: *

तदेवाऽग्निस्तदाऽऽदित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः ॥ १ ॥

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।
नैनमूर्ध्वं न तिर्य्यञ्चं न मध्ये परिजग्रभत् ॥ २ ॥

न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ।
हिरण्यगर्भ इत्येष, मा मा हिं सीदित्येषा,
यस्मान्नजात इत्येषः ॥ ३ ॥

एषो ह देवः प्रदिशोऽनु सर्वाः
पूर्वो ह जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः
प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ॥ ४ ॥

यस्माज्जातं न पुरा किञ्चनैव
य आबभूव भुवनानि विश्वा ।

प्रजापतिः प्रजया संरराण-
स्त्रीणि ज्योतींषि सचते स षोडशी ॥ ५ ॥

येन द्यौ रुग्रा पृथिवी च दृढ़ा
येन स्वःस्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः
कस्मै देवाय हविषा विधेम ॥ ६ ॥

यं क्रंदसी अवसा तस्तभाने
अभ्यैक्षेतां मनसा रेजमाने ।
यत्राऽधि सूर उदितो विभाति
कस्मै देवाय हविषा विधेम ॥ ७ ॥

वेनस्तत्पश्यन्निहितं गुहा सत्-
यत्र विश्वं भवन्येकनीडम् ।
तस्मिन्निदं सञ्च वि चैति सर्वं
स ओतः प्रोतश्च विभूः प्रजासु ॥ ८ ॥

प्र तद्वोचेदमृतं नु विद्वान्
गन्धर्वो धाम विभृतं गुहा सत् ।
त्रीणि पदानि निहिता गुहास्य
यस्तानि वेद स पितुः पितासत् ॥ ९ ॥
स नो बन्धुर्जनिता स विधाता
धामानि वेद भुवनानि विश्वा ।
यत्र देवा अमृतमानशाना-
स्तृतीये धामन्नध्यैरयन्त ॥ १० ॥
परीत्य भूतानि परीत्य लोकान्
परीत्य सर्वाः प्रदिशो दिशश्च ।
उपस्थाय प्रथमजामृतस्या-
त्मनात्मानमभि सं विवेश ॥ ११ ॥

परि द्यावापृथिवी सद्य इत्वा
परि लोकान् परि दिशः परि स्वः।
ऋतस्य तन्तुं विततं विचृत्य
तदपश्यत्तदभवत्तदासीत् ॥ १२ ॥

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्।
सनिं मेधामयासिषं स्वाहा ॥ १३ ॥

यां मेधां देवगणाः पितरश्चोपासते।
तया मामद्य मेधयाऽग्ने! मेधाविनं कुरु स्वाहा ॥ १४ ॥

मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः।
मेधामिन्द्रश्च वायुश्च मेधां धाता ददातु मे स्वाहा ॥ १५ ॥

इदं मे ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम्।
मयि दधतु श्रियमुत्तमां तस्यै ते स्वाहा ॥ १६ ॥

यजु० ३२ अध्यायः।

# प्रसन्नराघवम् ।

## तृतीयोऽङ्कः

### * कुब्जक वामनक संवादः *

( ततः प्रविशति वामनकः )

**वामनकः**—(आत्मानं विलोक्य । सविस्मयम् ।) अहो अङ्गानां मे तुङ्गत्वम् । अपि नाभेः शीर्षाङ्गैरत्र संगता मया द्वारशिखरं भज्यते । तत्कुब्जो भूत्वा संचरिष्यामि ।

( प्रविश्य )

**कुब्जकः**—वयस्य वामनक ! इदानीं सकलगुणसंयुक्तोऽसि त्वम् ।

**वामनकः**—कथमिव ?

**कुब्जकः**—प्रथममेव वामन इदानीं पुनः कुब्जत्वं प्राप्तः ।

**वामनकः**—( सक्रोधम् । ) अये मूर्ख ! कथमात्मनः कुब्जत्वं परस्मिन्नारोपयसि । ननु त्वमेव कुब्जकः । मया पुनर्द्वारशिखरभङ्गशङ्कनेनात्मनि कुब्जत्वमारोपितम् ।

**कुब्जकः**—( विहस्य । ) कथं वितस्तिमात्रेण तवाऽङ्गेन द्वारशिखरं भङ्क्ष्यते । अरे अलीकवाचाल ! केन तव कथितमहं कुब्जक इति ।

**वामनकः**—नन्वनेनैव दृप्तवृषभककुदसदृशेन पृष्ठस्थितेन मांसस्तबकेनोद्घाहितेन ।

**कुब्जकः**—( विहस्य । ) अये मतिशून्य ! कथमयं मांसस्तबकोऽपि पुनः सौभाग्यलक्ष्म्या उपधानगेन्दुकः ।

वामनकः—( साशङ्कम् । ) अरे, शनैर्जल्प । अस्माद्दृशानामन्तः पुर-चारिणां सौभाग्यवृत्तान्तमाकर्ण्य भर्ता कोपिष्यति ।

कुब्जकः—अलं भीरुत्वेन । इदानीं ध्यानगृहे वर्तते भर्ता ।

वामनकः—न खलु न खलु । अद्य किल कस्यापि प्राघूर्णकस्य महर्षे-रागमनं परिपालयन्बाह्यमण्डपे वर्तते ।

कुब्जकः—हा हताः स्मः ।

वामनकः—किमिति ।

कुब्जकः—ननु प्रथममेवैकेन महर्षिणा याज्ञवल्क्येनोपदिष्टोऽयं राजा अक्षिमीलनै रात्रीर्गमयति । इदानीं पुनरनेनोपदिष्टोऽन्तः-पुरमेव परिहरिष्यति । ततः किमयमस्माभिः क्षपणक इव कर्पटपेटकैः करिष्यति ।

वामनकः—सत्यमेत् । यद्ययं महर्षिरस्माकं राज्ञ उपदेशार्थमागतो-भवेत् । अयं पुनर्हरधनुर्दर्शनार्थम् ।

कुब्जकः—किमस्य महर्षेर्होमाऽग्निधूमश्यामलितलोचनस्य हर-चापदर्शनेन । नन्तर्कयामि क्षात्रयब्राह्मणोऽयमिति ।

वामनकः—( विहस्य । ) कथं तनुरिव मतिरपि ते वक्रा यदेवं तर्क-यसि । सत्यं क्षत्रियब्राह्मणोऽयमिति ।

कुब्जकः—तत्कोऽप्यनर्थः संभाव्यते यत्किल चिरतपस्याकर्षितो-ऽयं तीव्र प्रेक्षमाणः क्षत्रियब्राह्मण ऋजुमतेरस्माकं राजर्षे-राज्यं ग्रहीतुमागत इति ।

वामनकः—शान्तं पापम् । ईदृशं मा जल्प । अयं हि चिरतपस्या-परितोषितस्य ब्रह्मणो वाचा क्षत्रियत्वं परिहृत्य ब्राह्मणत्वं प्राप्तः ।

कुब्जकः—कथं तनुरिव मतिरपि तव वामनी यदीदृशाऽलीक-लोकवृत्तान्तेऽपि प्रत्याय्यते। यदि कस्यापि वाचा क्षत्रियो-ब्राह्मणोभवति तर्हि मम वाचा त्वमपि ब्राह्मणो भवसि।

वामनकः—अरे बालिश ! कथं तव गोमुखस्य तत्रभवतश्चतु-र्मुखस्यापि नास्त्यन्तरम्।

कुब्जकः—यद्ययं शुद्धब्राह्मणस्तत्किमस्य चापचिन्तया ?

वामनकः—अस्ति कारणम्। तस्य पार्श्वे तत एव गृहीतचापविद्यौ द्वौ क्षत्रियकुमारौ वर्तेते। ताभ्यां दर्शयिष्यति चापमिति।

कुब्जकः—तच्छुद्धाशयोऽयम् ?

वामनकः—अथ किम्।

कुब्जकः—तत्कथय तावदस्मिन्नलीकदूषणाऽऽरोपेण ननु मम पाप-मुत्पन्नं न वेति ?

वामनकः—पापमिति किं भण्यते। ननु महापापमुत्पन्नम्।

कुब्जकः—अरे मूर्ख ! न जानासि धर्मस्य तत्त्वम्। संबन्धिजने परिहासवचनानि न खलु पापकारणानि।

वामनकः—कथं पुनरयं तव संबन्धिजनः।

कुब्जकः—अरे, न जानासि। अस्यापि द्वौ कुमारौ, अस्माकमपि द्वे कुमार्यौ। तत्तर्कयामि संबन्धिजनो भविष्यतीति।

वामनकः—( विहस्य। ) कथमस्माकमीदृशं पुण्यम्।

( नेपथ्ये )

ताटङ्किना झटितिताडितताटकेन
रामेण पद्मरमणीयविलोचनेन।

क्रीडाशिखण्डकधरेण सलक्ष्मणेन
साकं मुनिः कुशिकसूनुरितोऽयमेति ॥ १ ॥

वामनकः—( सहर्षविस्मयम् ) अहो, या खलु सकललोकभीषणा राक्षसी ताटकेति श्रूयते सानेन यदि ताडिता तदस्मिन् हरचापारोपणमपि संभाव्यते। तदेहि । इमं कर्णसुधारसं भक्तिनीभ्यः समर्पयामः।

( निष्क्रान्तौ। )

इति प्रवेशकः।

# प्रसन्नराघवस्य



## चतुर्थोऽङ्कः

### * रामपरशुरामसंवादः *

( नेपथ्ये ध्रुवा गीयते )

मणिमयमङ्गलदीपो जनकनरेन्द्रस्य मण्डपे ज्वलति ।
चण्डानिलोऽपि प्राप्तो यस्मिन्विफलागमो भवति ॥ १ ॥

( पुनर्नेपथ्ये । )

अरे क्षत्रियाः ! अपसरत लोचनपथात् । नन्वयं—

कुर्वन्कोपादुदश्रद्रविकिरणसटापाटलै दृष्टिपातै-
रद्यापि क्षत्रकण्ठच्युतरुधिरसरित्सिक्तधारं कुठारम् ।
तीव्रैर्निःश्वासपातैः पुनरपि भुवनोत्पातमासूचयद्भि-
र्गर्जन्मौर्वीकचापस्त्रिभुवनविजयी जामदग्न्यः समेति ॥ २ ॥

( ततः प्रविशति जामदग्न्यः । )

जामदग्न्यः—( साटोपं परिक्रम्य । ) अहो धृष्टता जनकस्य । यदयं हरचापारोपणेन पणेन कन्यादानं प्रतिजानीते ।

( परशुं विलोक्य । )

सकलनृपकठोरकण्ठपीठीबहलगलद्रुधिरौघधौतधारः ।
तदिदमजनकं जगद्विधत्ते परशुरयं जमदग्निनन्दनस्य ॥ ३ ॥

( विमृश्य । )

उदितोऽर्जुनभुजविपिने ज्वलितस्तुङ्गेषु नृपतिवंशेषु ।
निमिकुलकमलकलापं कोपानल ! किं पुनः स्पृशसि ॥ ४ ॥

( पुनर्विचिन्त्य । ) अलमस्मिन्नुपेक्षया । मनोरथोपनीतजामातृभुजबलावलेपदुर्ललितः खल्वयम् । तथा हि । संदिष्टमनेनास्मत्परशोः—

"त्वं मित्रं मम, जामदग्न्यपरशो ! तेनैतदाभाष्यसे
संप्रत्येव यथाप्रतिश्रुतमियं कन्या मया दीयते ।
तेनेह स्वयमेत्य धूर्जटिधनुर्धौरेयदोःसंपदो-
जामातुः पुरत श्चिराय भवता धाराजलं त्यज्यताम्" ॥ ३ । ३६ ॥

अहो अस्य दुरवलेपः ।

यस्योद्यद्घोरधाराश्चलदलितगलद्बाहुशाखासहस्र-
प्रोद्गच्छद्रक्तधारानिवहजितनवोन्मीलदर्कांशुजालः ।
क्ष्मापालः कार्तवीर्यः सुरपुरसुदृशां पुष्पिताऽशोकशाखि-
भ्रान्तिदत्त्वाऽपिचित्ते निजपुरसुदृशां शोकशाखीबभूव ॥ ५ ॥

अपि च ।

येनाऽबध्यत नर्मदाम्बुनिवहः संख्ये च लंकेश्वर-
स्तद्यस्मिन्निरमज्जदर्जुनभुजक्षोणीरुहां मण्डलम् ।
क्षत्रस्त्रीनयनाऽम्बुपूरमिषतः खेलन्ति यत्केलय-
स्तत्तादृक्परशु र्ममायमधुना धाराजलं मुञ्चति ॥ ६ ॥

( विलोक्य । ) कथमयं शतानन्दशिष्यस्ताण्डयायनः ।

( प्रविश्य । )

ताण्ड्यायनः—भगवन् ! अभिवादये ।

जामदग्न्यः—आयुष्मान्भूयाः । कथय तावत् । अपि नाम भवदुपाध्याययजमानस्य निवृत्ता हरचापाऽऽरोपणश्रद्धा ?

ताण्ड्यायनः—निवृत्ता ।

जामदग्न्यः—( सहर्षम् । ) निवृत्ता ?

ताण्ड्यायनः——भगवन्! निवृत्ता सहैव चापेन।

जामदग्न्यः——( ससंभ्रमम्। ) किमात्थ सहैव चापेन निवृत्तेति?

ताण्ड्यायनः——अथ किम्।

जामदग्न्यः——स्फुटं कथय तावत्किं वृत्तमिति।

ताण्ड्यायनः—कस्यचिद्--

अखण्डचण्डिमोद्दण्डभुजदण्डनिपीडितम्।
भगवन्भृगुमार्तण्ड! भग्नं भर्गशरासनम्॥ ७॥

जामदग्न्यः—( सक्रोधम्। ) कस्य?

ताण्ड्यायनः—

सुबाहुमारीचपुरःसरा अमी
निशाचराः कौशिकयज्ञघातिनः।
वशे स्थिता यस्य…… …. …

जामदग्न्यः—अलम्। अतः परं ज्ञातः खलु खलानामग्रणीर्निशाचरग्रामणीः।

ताण्ड्यायनः—( स्वगतम्। ) कथं दशकण्ठेन धनुर्भग्नमिति प्रतीतं भगवता? भवतु तावत्।

जामदग्न्यः—( सक्रोधम्। ) अयमयमिदानीं—

नृपशतसुकुमारकण्ठनालौ कदनकलाकुशलः परश्वधो मे।
दशवदनकठोरकण्ठपीठीकदनविनोदविदग्धतां दधातु॥ ८॥

(विमृश्य।) अथवा।

यः कर्ताऽर्जुनभूरुहाऽद्भुतभुजाशाखासहस्रच्छिदां,
दम्भोलेर्गिरिकूटपाटनपटोः शौण्डीर्यतो लज्जते।

तस्यैतस्य परेतराजसदनद्वारः, कुठारस्य मे
का श्लाघा दशकण्ठकण्ठकदलीकाण्डावलीखण्डने ॥ १० ॥

( पुनर्विचिन्त्य । ) तथाप्यनुचितमुदासितुमेतस्मिन्कृतागसि रक्षसि । तदिदानीं—

दक्षिणस्याऽम्बुधे मध्ये कृत्वा कोङ्कणमष्टमम् ।
मद्बाणजन्मा दहनो लङ्काऽऽतङ्काय जायताम् ॥ ११ ॥

( इति साटोपं परिक्रामति । )

ताण्ड्यायनः—( स्वगतम् । ) दिष्ट्या स्वस्ति क्षत्रियकुलाय ।

( नेपथ्ये । )

"अहो नियोगिनः, कृतविवाहमङ्गलयोः सीतारामचन्द्रयोः स्वस्तिवाचनिका द्विजा आहूयन्ताम्" ।

जामदग्न्यः—( परिवृत्य । सक्रोधम् । ) आः ब्रह्मबन्धो ! कथमलीकदशकण्ठकीर्तिदानेन प्रतारितोऽस्मि । नन्वयमन्यः कोऽपि जनकजामाता ।

ताण्ड्यायनः—भगवन् ! मम को वाऽपराधः । अर्धोक्त एव भगवता भ्रान्तम् । मयापि संभ्रान्तम् ।

जामदग्न्यः—तन्निःशेषं तावत्कथय ।

ताण्ड्यायनः—

..................शराऽग्रवर्तिनः
प्रतापलेशस्य गताः पराभवम् ॥ ८ ॥

तस्यैव 'अखण्डचण्डिमा' ४।७ इत्यादि पठति ।

जामदग्न्यः—कः पुनरयं मारीचदमनः ?

ताण्ड्यायनः—

ये ऋष्यशृङ्गचरुभागभुवः कुमाराः
संजज्ञिरे दशरथस्य वधूजनेन।
तेषामयं निरुपमः प्रथमः कुमारो-
रामाऽभिधः कुशिकराजतनूजशिष्यः॥ १२॥

जामदग्न्यः—( क्षणं विभाव्य। सामर्षम्।)

दुर्धर्षाः सुरसिद्धकिंनरनरै, स्त्यक्तक्रमं वक्रतां
प्राप्ते यत्र विधातरीव तरसा तिस्रोऽपि दग्धाः पुरः।
तद्भग्नं यदि राघवेण शिशुना चण्डीपतेः कार्मुकं

ताण्ड्यायनः—( स्वगतम्। ) किमधुना वक्ष्यति ?

जामदग्न्यः—

तन्मग्नं कुलमेव तर्कय रघोर्मच्छस्त्रधाराऽम्भसि॥ १३॥

ताण्ड्यायनः—संरब्धोऽयं भगवान्। तदिमं वृत्तान्तमुपाध्यायस्य कथयामि।( इति निष्क्रान्तः। )

जामदग्न्यः—( विलोक्य। ) अभिनवविवाहमङ्गलतया तर्कयामि-स एष रामः साऽनुज इति। ( सहर्षम् निर्वर्ण्य ) अर्धमुग्धः खल्वयं जनो यदेनं काम इति वक्तव्ये राम इति जल्पति।

( पुनर्निर्वर्ण्य )

सौन्दर्यं मदनादपि प्रथयति प्रौढिप्रकर्षं, पुरां—
भेत्तारं मदनाऽरिमप्यधरयत्युद्दामदोःक्रीडितम्।
मुग्धत्वं मदनारिमौलिशशिनोऽप्युत्कर्षमालम्बते,
मूर्त्तैस्तत्किमसौ रसैर्विरचितः शृङ्गारवीराऽद्भुतैः॥ १२॥

( ततः प्रविशतो रामलक्ष्मणौ । )

लक्ष्मणः—( सकौतुकम् । )

मौर्वी धनु, स्तनुरियं च बिभर्ति मौञ्जीं,
बाणाः कुशाश्च विलसन्ति करेऽसिताऽऽभाः ।
धारोज्वलः परशुरेष कमण्डलुश्च,
तद्वीरशान्तरसयोः किमयं विकारः ॥ १५ ॥

आर्य ! किं पुनरिदं ब्रह्मक्षत्रवर्णात्मकं चित्रमिव स्फुरति ?

रामः—वत्स ! न विदितं ते । नन्वयं स भगवान्भार्गवः—

वेध्यं क्रौञ्चमहीधरस्य शिखरं, देयं धरित्रीतलं,
प्रत्यग्रक्षितिखण्डदण्डनविधिक्रीडाविधेयोऽम्बुधिः ।
जेयस्तारकसूदनो, युधि करक्रीडाकुठारस्य च
च्छेद्यं यस्य बभूव हैहयपतेरुद्दामदोःकाननम् ॥ १६ ॥

लक्ष्मणः—तर्हि विस्मयनीयशीलोऽयं भगवान् ।

रामः—विस्मयनीयशीलानां शिखामणिरिति वक्तव्यम् ।
अयं हि—

एकः स्वर्णमहीधरां क्षितिमिमां स्वर्णैकशृङ्गीं यथा
गामेकां प्रतिपाद्य कश्यपमुनौ न स्वात्मने श्लाघते ।
किंच क्रौञ्चगिरिं गिरीशतनयस्याविद्धशक्तिक्षतं
विद्ध्वा बाणगणैरुदारहृदयो वैलक्ष्यमालम्बते ॥ १७ ॥

( उभौ परिक्रामतः । )

रामः—( अञ्जलिं बद्ध्वा । ) भगवन् ! भृगुकुलशिरःशेखरशिखण्डक !
एष सानुजस्य मे परमोन्नतिरमणीयपरिणामः प्रणामः ।

जामदग्न्यः—समरविजयी भूयाः।

रामः—भगवन्! भृगुकुलमौलिमाणिक्य! अनुगृहीतोऽस्मि।

जामदग्न्यः—( स्वगतम्। सकरुणम्। )

रामे चन्द्राभिरामे विनयवति शिशौ किं प्रकुप्याऽतिमात्रं,

( विमृश्य। सक्रोधम्। )

हुँ चापं चन्द्रमौलेश्चपलमतिरसाविक्षुदण्डं बभञ्ज।

( पुनः सानुक्रोशम्। )

बाला वैधव्यदीक्षां जनकनृपसुता नाऽर्हतीयं मदस्त्रात्,

( पुनर्विचिन्त्य। सामर्षम्। )

आः शान्तो मे कुठारः कथमयमधुना रेणुकाकण्ठशत्रुः॥ १८॥

( प्रकाशम्। ) दाशरथे! इयमसौ मे त्वयि समुदाचारानुसारिणी वाग्वृत्तिरेव।

रामः—( विहस्य। ) मनोवृत्तिस्तु कीदृशी?

जामदग्न्यः—

चण्डीशकार्मुकविमर्दविवर्धमान-
दर्पावलेपसविशेषविकाशभाजोः।
बाह्वोस्तवाऽहमधुना मधुना समाने-
राराधयामि रुधिरैः कठिनं कुठारम्॥ १९॥

रामः—भगवन्! निग्रहानुग्रहयोः स्वाधीनोऽयं जनः। परं ते कोपबीजं ज्ञातुमिच्छामि।

जामदग्न्यः—अहो दर्पान्धता, यदात्मना कृतमस्माभिरुक्तमपि नाव-

धारयति निजदुर्विनयम्। ननु रे,

येनोपदिष्टमद्यापि पुरस्त्रीविरहव्रतम्।
न भुग्नं, तत्त्वया भग्नं जगद्गुरुशरासनम् ॥ २० ॥

रामः—भगवन्! अलीकलोकवार्तया निरपराधे मयि मुधा कोपकलङ्कितोऽसि।

जामदग्न्यः—तत्किं स्वस्ति हरकार्मुकाय?

रामः—नहि नहि।

जामदग्न्यः—तत्कथं निरपराधोऽसि?

रामः—

मया स्पृष्टं न वा स्पृष्टं कार्मुकं पुरवैरिणः।
भगवन्नात्मनैवेदमभज्यत करोमि किम् ॥ २१ ॥

जामदग्न्यः—आः, कथं रे चन्दनदिग्धं नाराचं निधाय हृदयं मे शीतलयसि। तदलमनेन। (कुठारमुद्यम्य।)

हे राम! कामरिपुकार्मुककर्मघात-
संजातपातक! तवैष कठोरधारः।
सीताकरव्यतिकरप्रतिकूलबन्धुः
कण्ठं पुरा विशतु निष्करुणः कुठारः ॥ २२ ॥

तत्प्रवीरो भव।

रामः—

हारः कण्ठं विशतु यदि वा तीक्ष्णधारः कुठारः
स्त्रीणां नेत्राण्यधिवसतु नः कज्जलं वा जलं वा।
संपश्यामो ध्रुवमिह सुखं प्रेतभर्तुर्मुखं वा
यद्वा तद्वा भवतु न वयं ब्राह्मणेषु प्रवीराः ॥ २३ ॥

जामदग्न्यः—आः, कथं मामपि प्रणतिपात्रं ब्राह्मणमात्रमिव मन्यसे।

( पुनः सामर्षम् )

जानीषे नहि जामदग्न्यमपि रे यद्दीर्घदोःकन्दल-
द्वन्द्वाऽऽस्कन्दितबाहुना रणभुवि स्कन्देन मन्दौजसा ।
नास्राक्षीद्भुजसंपदं मम कथं वक्त्रानुसारादिति
क्रुद्धेनोद्धतमैक्षि शंकरकरन्यस्तं विधातुः शिरः ॥ २४ ॥

[ पुनः सामर्षम् । ] किमात्थ रे, किमात्थ । 'न वयं ब्राह्मणेषु प्रवीराः' इति । कथं क्षत्रियजातिगर्वितो ब्राह्मणजातिं तृणाय मन्यसे । तदिदानीमावयोः का गरीयसीति सङ्ग्रामतुलैव निर्णेष्यते ।

रामः—

भो ब्रह्मन् ! भवता समं न घटते संग्रामवार्तापि नः
सर्वे हीनबला वयं, बलवतां यूयं स्थिता मूर्धनि ।

लक्ष्मणः—जामदग्न्य ! एवमेतत्—

यस्मादेकगुणं शरासनमिदं सुव्यक्तमुर्वीभुजा-
मस्माकं, भवतां पुनर्नवगुणं यज्ञोपवीतं बलम् ॥ २५ ॥

रामः—वत्स ! अलमिह माननीये मुनौ दुर्विनयवैदग्ध्येन ।

जामदग्न्यः—अस्य को दोषः—

दारैर्मुक्तकुचांऽशुकैः परिवृतं प्राचीनमेषां नृपं
नाऽहिंसीद्यदसौ कुठारहतकस्तस्यैतदुज्जृम्भितम् ।
यन्नारीकवचाऽन्वयप्रणयिनां क्षत्त्राऽधमानामिमा-
दुर्वाचः प्रविशन्ति मे श्रवणयोर्धिक्क्षत्रगोत्रे कृपाम् ॥ २६ ॥

रामः—अलमिह क्षीरकण्ठे कठोरकोपतया । तत्क्षम्यताम् ।

जामदग्न्यः—आः किमुच्यते, क्षीरकण्ठ इति । विषकण्ठःखल्वसौ ।

लक्ष्मणः—भगवन् ! शितिकण्ठशिष्येण विशेषतः क्षन्तव्यम् ।

जामदग्न्यः—आः, कथं विषकण्ठनामसाम्येन त्वमपि मे गुरुः।

लक्ष्मणः—[ विहस्य। ] भगवन्! अन्याभिसंधानेन मयेदमुक्तं यत्किल-

किरीटमधिरूढेऽपि बाले प्रालेयरोचिषि।
शितिकण्ठस्य किं चित्ते धत्ते कोपाङ्कुरः पदम्॥ २७॥

तद्भवांस्तदन्तेवासीति विशेषतः क्षन्तुमर्हति।

जामदग्न्यः—( स्वगतम्। ) अहो, अस्य क्षत्रियवटोर्वाक्यपरिपाटीपाटवम्। भवतु। ( प्रकाशम्। ) तदिदं क्षान्तमेव मया। अयं तु न क्षमते प्रकृतिकठोरः कुठारः। शीलं न वेत्सि कथमस्य—

क्रीडाविनिर्मितसुदुर्मददोर्विलास-
निःशेषराजकवधस्य परश्वधस्य।
कीलालकीकसकचैः परितो विचित्य
येन त्रिधाऽपि विदधे पृथिवी त्रिवर्णा॥ २८॥

( पुनः सामर्षम् )। कथमस्य हरप्रसादपरशोः शीलमपरिशीलितं ते—

यत्र क्रामति संगराङ्गणभुवं दुर्वारधाराञ्चल-
क्षुण्णक्षत्रकिशोरकण्ठरुधिरै र्नीरेणुका भूरभूत्।
तादृग्वीरवरस्वयंवरपरस्वर्लोककन्याकर-
क्रीडापुष्करदामरेणुभिरभूद्द्यौरेव रेणूत्कटा॥ २९॥

लक्ष्मणः— भगवन्! एतत्सत्यम्। यत्किल भवत्कुठारधाराञ्चलविलसितेन नीरेणुका भूरभूदिति।

जामदग्न्यः— ( स्वगतम्। ) आः, कथं रेणुकावृत्तान्तेन मर्म विध्यति। भवतु। ( प्रकाशम्। ) अये क्षत्रियपोत! अलमिह निरपराधे भवति मुधा परश्वधपातेन। तदयं मे प्रकृतिकठोरभाषिणं भवत्कण्ठमेव शातयति कुठारः।

( नेपथ्ये ।)

अये जामदग्न्य ! कथमतिप्रगल्भसे । तदिदमिदानीं भवच्छासनाय शरासनमानीयते ।

जामदग्न्यः—( विहस्य । ) कथमयं जनकः । ( उच्चैः ) अये याज्ञवल्क्यशिष्य ! किं भवतः शरासनेन । पद्मासनमेवावलम्बस्व ।

( पुनः सोत्प्रासम् ।)

युष्माकं भोः सुघटितबहुन्यस्तपद्माक्षकण्ठाः !
मिथ्योत्कण्ठा किमिति समिति क्षत्रियश्रोत्रियाणाम् ।
तेऽन्ये चञ्चत्करतलचलच्चण्डनिस्त्रिंशधारा-
धौताऽरातिद्विपमदमषीपङ्कपूराः प्रवीराः ॥ ३० ॥

तदलं भवता । एतावेव तावत्क्षत्रियस्फुलिङ्गौ निर्वापयामि ।

( नेपथ्ये । )

अये जामदग्न्य ! कथं तथा शमधनसमृद्धस्य जमदग्नेस्तनयोऽपि शमदुर्गतोऽसि संवृत्तः ।

जामदग्न्यः—कथमयमाङ्गिरसः । ( उच्चैः ।) अये शतानन्द ! कथय तावत् । इदमेवंविधं शमाऽभिधानं कस्मादुपात्तम् । भगवतो गौतमाद्वा गोत्रभिदो वा ।

( नेपथ्ये ।)

आः क्षत्रियापुत्र ! निजजननीकण्ठताण्डवितकुठार ! कुलाङ्गार ! कथं तपस्तुङ्गमाङ्गिरसमपि कुलं कलङ्कयसि ?

जामदग्न्यः— आः पाप ! कुलपांसन ! पांसुलापुत्र, ! कथं भृगूणामग्रे तपस्ताण्डवं मण्डयसि ?

रामः—भगवन् ! सकललोकविख्यातमिदं भृगूणामाङ्गिरसां च कुलम्। तपोविशेषतस्तु भर्गशिष्यस्य। अत एव विज्ञापयामि—

तपः शान्तं चेतः, स्फटिकमणिमाला परिकरः
कुशाः कुण्डी दण्डः सततमुटजावासनिरतिः।
मुनीनामेतद्वः समुचितमुदग्रं न वचनं
न वक्रभ्रूभङ्गो न शरधनुषी नापि परशुः ॥ ३१ ॥

( पुनः सविस्मयम्। ) भवानेव तावद्विचारयतु।

क्व परशुरशुभस्ते कुत्र गोत्रं पवित्रं
क्व नु धनुरिदमुग्रं निर्मलं कुत्र शीलम्।
घनसमरकराला कुत्र नराचहेला
कुशकिसलयलीला कुत्र वा पर्णशाला ॥ ३२ ॥

जामदग्न्यः—कथमन्यमिव मां प्रणतिपात्रं मुनिमात्रं मन्यसे। स एष जामदग्न्यः खल्वहं—

क्षुण्णक्षत्रकठोरकण्ठविगलत्कीलालधारासरि-
न्निर्वृत्ताभिषवस्य कृत्तशिरसां केशान्कुशान्कुर्वतः।
गृह्णन्रक्तजलाञ्जलीन्पितृगणो यस्य क्षणं विस्मितः
संतोषेण जुगुप्सया करुणया त्रासेन हासेन च ॥ ३३ ॥

तदलम्। इदानीमपि—

कृत्वा त्रिःसप्तकृत्वः समिति विशसनं पूर्वमुर्वीपतीनां
कृत्वान्यत्सप्तकृत्वः पुनरपि कदनं दुर्मदानां नृपाणाम्।
निर्माय क्ष्मापतीनां प्रतिसमरहतैरुत्तमैरुत्तमाङ्गैः
कापालीमक्षमालां झटिति भगवतो भैरवस्यार्पयामि ॥३४॥

रामः—

प्रसीद त्वं, रोषाद्विरम, कुरु मे चेतसि गिरं,
चिरं यत्राऽऽयासैर्बहुभिरिह वारैर्जितमभूत्।

यशोवित्तं वृत्तं कितव इव विक्षोभतरलं
तदेतस्मिन्वारे भृगुतिलक ! मा हारय मुधा ॥ ३५ ॥

जामदग्न्यः—कथं रे हारयिष्यामि । ( विमृश्य ।) अथवा–

किं नाम वाग्डम्बरपण्डितेषु युष्मासु बाणीः प्रचुराः प्रयुञ्जे ।
बाणान्रिपुप्राणहरान्मदीयान्सर्वेऽपि यूयं सहिताः सहध्वम् ॥३६॥

रामः—किमन्यैर्नन्वहमेव हरशरासनारोपणोपनीतजानकीकरकिसलयलीलानिहितकमलमालिकामिलदलिपटलकोलाहलसंगीतयशःपरिमलेन वक्षःस्थलेन सहिष्ये ।

जामदग्न्यः—

ईशत्यक्तपुराणचापदलनप्रोद्भूतगर्वोद्धति-
व्यग्रस्त्वं कतरः स मे तव गुरुः सोढुं न शक्तः शरान् ।
तुष्टादिष्टवरप्रदाद्भगवतः पद्मासनात्सादरं
मन्नाराचभयादयाचत किल ब्राह्मीं तनूं कौशिकः ॥ ३७ ॥

रामः— ( स्वगतम् ) कथं भगवन्तं विश्वामित्रमधिक्षिपति ? तदतःपरं न सहिष्ये । ( प्रकाशम् ।)

ईशत्यक्तपुराणचापदलनप्रोद्भूतगर्वोद्धति-
व्यग्रोऽहं कतरः स ते मम गुरुः सोढुं न शक्तः शरान् ।
तुष्टादिष्टवरप्रदाद्भगवतः पद्मासनात्सादरं
त्वन्नाराचभयादयाचत किल ब्राह्मीं तनूं कौशिकः ॥ ३८ ॥

( इति पदव्यत्यासेन पुनः श्लोकं पठति । पुनः साटोपम् । ) अये जामदग्न्य !

तत्कोदण्डं कुलिशकठिनं भग्नमेतेन भग्नं
मग्नं शल्यं तव हृदि महद्भग्नमेतावता किम् ।
त्रैयक्षं वा भवतु यदि वा नाम नारायणीयं
नैतत्किंचिद्गणयति स मे दुर्मदो दोर्विलासः ॥ ३९ ॥

जामदग्न्यः--( सहर्षम् । ) साधु रे क्षत्रियपोत ! साधु । यत्किल जामदग्न्यनाम्नश्चण्डधाम्नः पुरतः खद्योत इव विद्योतसे । किमात्थ रे, किमात्थ ?

रामः--- (तदेव पठति।) नन्विदं भूयोऽप्युच्यते। (पुनस्तदेवपठति)

जामदग्न्यः-- साधु स्मारितोऽस्मि ।

रामः--किं तत् !

जामदग्न्यः--

कराघाताद्विष्णोस्तरलवनमालापरिमल-
भ्रमद्भृङ्गध्वानद्विगुणितविकाशः समजनि ।
स यस्य ज्याघोषः सुररिपुवधूवर्गरुदित-
ध्वनिस्वाध्यायानां प्रणव इव तत्कार्मुकमिदम् ॥ ४० ॥

रामः—

करपङ्केरुहक्रोडे क्रीडितं येन शार्ङ्गिणः ।

तदेतत् ?

जामदग्न्यः—

अथ किं, यदि शक्तोऽसि गृहाण विगृहाण वा ॥ ४१ ॥

रामः—गृह्णामि ।

जामदग्न्यः—तदेहि । वाष्पायमाणभवद्बन्धुजनबन्धुरां वसुंधरामतिक्रम्य समरक्षमां क्षमामवतरावः ।

( इति निष्क्रान्तौ ।)

लक्ष्मणः—( विलोक्य सहर्षं सकौतुकं च ।)

मा शांभवं धनुरिवेदमपि प्रयातु
भङ्गप्रसङ्गमिति मन्दबलद्भुजेन।
आर्येण कार्मुकमपीदमहो! सहेलं
चक्रीकृतं भगवतो गरुडध्वजस्य॥ ४२॥

( नेपथ्ये । )

अहो कौतुकम्—

उद्भिन्नश्चापचक्रादमरपरिहृतव्योमरन्ध्रावगाही,
बाणोऽयं राघवस्य, त्रिदशपुरगतिच्छेदकृद्भार्गवस्य।
हंसीभूतः सुरस्त्रीकरकमलगलत्पुष्पसौरभ्यलुभ्य-
द्भृङ्गीसंगीतभङ्गीपरिचलितयशाः स्वर्गपर्यङ्कमेति॥ ४३॥

( ततः प्रविशतो रामजामदग्न्यौ । )

जामदग्न्यः—(रामं विलोक्य निर्वर्ण्य च स्वगतम् । )

त्रिलोकी कोकीयं मुदमुदयताऽनेन लभते
विकाशं वा धत्ते मुनिजनमनःपङ्कजवनम्।
अये कोऽयं बालः कुवलयदलश्यामलतनु-
र्जगद्योनिर्ज्योतिः कथमिदमहो तत्परिणतम्॥ ४४॥

( पुनर्विमृश्य । )

आपूरणाय पुरवैरिशरासनस्य
बाणात्मना परिणतः किल लीलया यः।
आरोपणाय पुनरस्य स एव शङ्के
बालात्मना परिणतः पुरुषः पुराणः॥ ४५॥

( प्रकाशम् । ) वत्स! इतः।

( रामः सलज्जमधोमुखस्तिष्ठति । )

जामदग्न्यः—( उपसृत्य । रामस्य चिबुकमुन्नमय्य । ) किमति लज्जास्थानम्?

कमलबन्धुविलोचन ! यस्त्वया स्वमहिमोन्नमनैरधरीकृतः ।
न किमसावधरीकुरुते नरस्त्रिदशकोटिकिरीटमणीनपि ॥ ४६ ॥

रामः—(अञ्जलिं बद्ध्वा ।) भगवन् ! अलमनेन । दुर्विनयपङ्कमलिनीकृतमात्मानं तावद्भवच्चरणनखकिरणतरङ्गिणीजलेन क्षालयामि ।

चण्डमेव किल तिग्मरोचिषः सौम्यमेव किल शीतरोचिषः ।
चण्डसौम्यमिति कौतुकावहं नौमि तावकमहं महन्महः ॥ ४७ ॥

( इति पादयोः पतति । )

जामदग्न्यः—अयि कल्याणनिधे ! आशीरुक्तिरपि त्वयि पुनरुक्तिरेव । तथापीदमाशास्महे—

यशःपूरं दूरं तनु सुतनुनेत्रोत्पलवनी-
तमस्तन्द्राचण्डातप ! तप सहस्राणि शरदाम् ।
इयं चास्तां युष्मच्छरशमितलङ्केश्वरशिरः-
श्रितोत्सङ्गा नन्दत्सुरनरभुजङ्गा त्रिजगती ॥ ४८ ॥

तदनुजानीहि माम् । ( इति निष्क्रान्तः । )

रामः—( लक्ष्मणं प्रति । ) ननु कथं नयनपथमतिक्रान्त एव भगवान् । तदेहि । भृगुकुलतिलकवियोगखिन्नमात्मानं बन्धुजनविलोकनेन विनोदयावः ।

( इति निष्क्रान्ताः सर्वे । )

इति चतुर्थोऽङ्कः

# उत्तररामचरितम् ।



## प्रथमोऽङ्कः

इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे ।
वन्देमहि च तां वाणीममृतामात्मनः कलाम् ॥ १ ॥

( नान्द्यन्ते । )

सूत्रधारः—अलमतिविस्तरेण । अद्य खलु भगवतः कालप्रियानाथस्य यात्रायामार्यमिश्रान्विज्ञापयामि—एवमत्रभवन्तो विदांकुर्वन्तु । अस्ति खलु तत्रभवान्काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जतुकर्णीपुत्रः ।

यं ब्रह्माणमियं देवी वाग्वश्येवाऽन्ववर्तत ।
उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते ॥ २ ॥

एषोऽस्मि कविवशादायोध्यकस्तदानींतनश्च संवृत्तः । ( समन्तादवलोक्य । )

भो भोः, यदा तावदत्रभवतः पौलस्त्यकुलधूमकेतोर्महाराजरामस्यायं पट्टाभिषेकसमयो रात्रिंदिवमसंहृतनान्दीकः, तत्किमिदानीं विश्रान्तचारचरणानि चत्वरस्थानानि ?

( प्रविश्य । )

नटः—भाव ! प्रेषिता हि स्वगृहान्महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गमराक्षसाः सभाजनोपस्थायिनश्च नानादिगन्तपावना ब्रह्मर्षयो राजर्षयश्च, यत्समाराधनायैतावतो दिवसान्प्रमोद आसीत् ।

सूत्रधारः—आः, अस्त्येतन्निमित्तम् ?

नटः—अन्यच्च—

वसिष्ठाधिष्ठिता देव्यो गता रामस्य मातरः ।
अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम् ॥ ३ ॥

सूत्रधारः—वैदेशिकोऽस्मीति पृच्छामि । कः पुनर्जामाता ?

नटः—

कन्यां दशरथो राजा शान्तां नाम व्यजीजनत् ।
अपत्यकृतिकां राज्ञे रोमपादाय तां ददौ ॥ ४ ॥

विभण्डकसुतस्तामृष्यशृङ्ग उपयेमे । तेन द्वादशवार्षिकं सत्रमारब्धम् । तदनुरोधात्कठोरगर्भामपि जानकीं विमुच्य गुरुजनस्तत्र यातः ।

सूत्रधारः—तत्किमनेन । एहि । राजद्वारमेव स्वजातिसमयेनोपतिष्ठावः ।

नटः—तेन हि निरूपयतु राज्ञः सुपरिशुद्धामुपस्थानस्तोत्रपद्धतिंभावः ।

सूत्रधारः—मारिष !

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ ५ ॥

नटः—अतिदुर्जन इति वक्तव्यम्—

देव्या अपि हि वैदेह्याः सापवादो यतो जनः ।
रक्षोगृहस्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः ॥ ६ ॥

सूत्रधारः—यदिपुनरियं किंवदन्ती महाराजं प्रति स्यन्देत, ततः कष्टं स्यात् ।

नटः—सर्वथा ऋषयोदेवाश्च श्रेयो विधास्यन्ति । ( परिक्रम्य । भोभोः, क्वेदानीं महाराजः । ( आकर्ण्य । ] एवं जनाः कथयन्ति—

स्नेहात्सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान् ।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्मासनाद्विशति वासगृहं नरेन्द्रः ॥ ७ ॥

[ इतिनिष्क्रान्तौ । ]

इति प्रस्तावना ।

[ ततः प्रविशत्युपविष्टो रामः सीता च । ]

रामः—देवि वैदेहि ! विश्वसिहि । ते हि गुरवो न शक्नुवन्ति विहातुमस्मान् ।

किं त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
संकटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ ८ ॥

सीता—जानामि आर्यपुत्र ! जानामि । किंतु संतापकारिणो बन्धुजनविप्रयोगा भवन्ति ।

रामः—एवमेतत् । एते हि हृदयमर्मच्छिदः संसारभागाः । येभ्यो बीभत्समानाः संत्यज्य सर्वान्कामानरण्ये विश्राम्यन्ति मनीषिणः ।

[ प्रविश्य । ]

कञ्चुकी—रामभद्र !—[ इत्यर्धोक्ते साशङ्कम् । ] महाराज !—

रामः—[ सस्मितम् । ] आर्य ! ननु 'रामभद्र' इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य । तद्यथाभ्यस्तमभिधीयताम् ।

कञ्चुकी—देव ! ऋष्यशृङ्गाश्रमादष्टावक्रः संप्राप्तः ।

सीता—आर्य ! ततः किं विलम्ब्यते ?

रामः—त्वरितं प्रवेशय।

[ कञ्चुकी निष्क्रान्तः । ]

[ प्रविश्य । ]

अष्टावक्रः—स्वस्ति वाम्।

रामः—भगवन्! अभिवादये। इत आस्यताम्।

सीता—भगवन्! नमस्ते। अपि कुशलं सजामातृकस्य गुरुजनस्या-ऽऽर्यायाः शान्तायाश्च ?

रामः—निर्विघ्नः सोमपीथी भावुको मे भगवानृष्यशृङ्गः, आर्या च शान्ता ?

सीता—अस्मानपि स्मरति ?

अष्टावक्रः—[ उपविश्य । ] अथ किम्। देवि! कुलगुरुर्भगवान्वसिष्ठ-स्त्वामिदमाह—

"विश्वंभरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते।
तेषां वधूस्त्वमसि नन्दिनि! पार्थिवानां
येषां कुलेषु सविता च गुरुर्वयं च" ॥ ९ ॥

तत्किमन्यदाशास्महे। केवलं वीरप्रसवा भूयाः।

रामः—अनुगृहीताः स्मः।

लौकिकानां हि साधूनामर्थं वागनुवर्त्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुवर्तते ॥ १० ॥

अष्टावक्रः—इदं च भगवत्याऽरुन्धत्या देवीभिः शान्तया च भूयो-भूयः संदिष्टम्—"यः कश्चिद्गर्भदोहदोदयो भवत्यस्याः सोऽवश्यमचिरा-न्मानयितव्य" इति।

रामः—क्रियते यद्येषा कथयति।

अष्टावक्रः—ननान्दुः पत्या च देव्याः संदिष्टम्—"वत्से! कठोरगर्भेति नानीतासि। वत्सोऽपि रामभद्रस्त्वद्विनोदार्थमेव स्थापितः। तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्यामः" इति।

रामः—[ सहर्षलज्जास्मितम् ] तथास्तु। भगवता वसिष्ठेन न किंचिदादिष्टोऽस्मि?

अष्टावक्रः—श्रूयताम्—

"जामातृयज्ञेन वयं निरुद्धास्त्वं बाल एवासि नवं च राज्यम्।
युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत्परमं धनं वः" ॥ ११ ॥

रामः—यथा समादिशति भगवान्मैत्रावरुणिः—

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥ १२ ॥

सीता—अत एव राघवधुरंधर आर्यपुत्रः।

रामः—कः कोऽत्र भोः। विश्राम्यतामष्टावक्रः।

अष्टावक्रः—[ उत्थाय परिक्रम्य च। ] अये, कुमारलक्ष्मणः प्राप्तः। [ इति निष्क्रान्तः। ]

[ प्रविश्य। ]

लक्ष्मणः—जयति जयत्यार्यः। आर्य! अर्जुनेन चित्रकरेणास्मदुपदिष्टमार्यस्य चरितमस्यां वीथ्यामभिलिखितम्। तत्पश्यत्वार्यः।

रामः—जानासि वत्स! दुर्मनायमानां देवीं विनोदयितुम्। तत्कियानवधिः?

लक्ष्मणः—यावदार्याया हुताशनशुद्धिः।

रामः—शान्तं पापम्। [ ससान्त्ववचनम्। ]

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः ।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ १३ ॥

देवि देवयजनसंभवे ! प्रसीद । एष ते जीवितावधिः प्रवादः ।

क्लिष्टो जनः किल जनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशुभं च न तत्क्षमं ते ।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥ १४ ॥

सीता—भवत्वार्यपुत्र ! भवतु । एहि । प्रेक्षामहे तावत्ते चरितम् ।

( इत्युत्थाय परिक्रामति । )

लक्ष्मणः—इदं तदालेख्यम् ।

सीता—( निर्वर्ण्य । ) क एते उपरिनिरन्तरस्थिता उपस्तुवन्तीवार्यपुत्रम् ?

लक्ष्मणः—देवि ! एतानि तानि सरहस्यानि जृम्भकास्त्राणि । यानि भगवतो भृशाश्वात्कौशिकमुपसंक्रान्तानि । तेन च ताटकावधे प्रसादीकृतान्यार्यस्य ।

रामः—वन्दस्व देवि ! दिव्यास्त्राणि-

ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्रं शरदां तपांसि ।
एतान्यदर्शन्गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

सीता—नम एतेभ्यः ।

रामः—सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति ।

सीता—अनुगृहीतास्मि ।

लक्ष्मणः—एष मिथिलावृत्तान्तः ।

सीता—अहो, 'दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलेन देहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्रीरनादरत्रुटित-शंकरशरासनः शिखण्डमुग्धमुखमण्डल आर्यपुत्र आलिखितः ।

लक्ष्मणः—आर्ये ! पश्य पश्य—

संबन्धिनो वसिष्ठादीनेष तातस्तवार्चति ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १६ ॥

रामः—सुश्लिष्टमेतत्—

जनकानां रघूणां च संबन्धः कस्य न प्रियः ।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥ १७ ॥

सीता—एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरः । विवाहदीक्षिता यूयम् । अहो जानामि तस्मिन्नेव प्रदेशे तस्मिन्नेव च काले वर्ते ।

रामः—

समयः स वर्तत इवैष यत्र मां
समनन्दयत्सुमुखि ! गौतमार्पितः ।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः ॥ १८ ॥

लक्ष्मणः—इयमार्या । इयमप्यार्या माण्डवी । इयमपि वधूः श्रुतकीर्तिः ।

सीता—वत्स ! इयमप्यपरा का ?

लक्ष्मणः—( सलज्जास्मितम् । अपवार्य । ) अये, ऊर्मिलां पृच्छत्यार्या । भवतु । अन्यतः संचारयामि । ( प्रकाशम् ) आर्ये ! दृश्यतां द्रष्टव्यमेतत् । अयं च भगवान्भार्गवः ।

सीता—( ससंभ्रमम् । ) कम्पितास्मि ।

रामः—ऋषे ! नमस्ते ।

लक्ष्मणः—आर्ये ! पश्य । अयमार्येण—( इत्यर्धोक्ते । )

रामः—( साक्षेपम् । ) अयि ! बहुतरं द्रष्टव्यम् । अन्यतो दर्शय ।

सीता—( सस्नेहबहुमानं निर्वर्ण्य । ) सुष्ठु, शोभसे आर्यपुत्र ! एतेन विनयमाहात्म्येन ।

लक्ष्मणः—एते वयमयोध्यां प्राप्ताः ।

रामः—( सास्रम् । ) स्मरामि हन्त स्मरामि ।

जीवत्सु तातपादेषु नूतने दारसंग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥ १९ ॥

लक्ष्मणः—एष मन्थरावृत्तान्तः ।

रामः—( सत्वरमन्यतो दर्शयन् । ) देवि वैदेहि !

इङ्गुदीपादपः सोऽयं शृङ्गिबेरपुरे पुरा ।
निषादपतिना यत्र स्निग्धेनासीत्समागमः ॥ २० ॥

लक्ष्मणः—[ विहस्य । स्वगतम् ] अये, मध्यमाम्बावृत्तान्तमन्तरितमार्येण ।

सीता—अहो ! एष जटासंयमनवृत्तान्तः ।

लक्ष्मणः—

पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतम् ।
धृतं बाल्ये तदार्येण पुण्यमारण्यकव्रतम् ॥ २१ ॥

सीता—एषा प्रसन्नपुण्यसलिला भगवती भागीरथी ।

रामः—रघुकुलदेवते ! नमस्ते ।

तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसा रोषात्प्लुष्टान्पितुश्च पितामहान् ।
अगणिततनूतापस्तप्त्वा तपांसि भगीरथो
भगवति ! तव स्पृष्टानद्भिश्चिरादुदतीतरत् ॥ २२ ॥

सा त्वमम्ब ! स्नुषायामरुन्धतीव सीतायां शिवानुध्याना भव ।

लक्ष्मणः—एष भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम ।

[ रामः सस्पृहमवलोकयति । ]

सीता—स्मरति वा तं प्रदेशमार्यपुत्रः ?

रामः—अयि, कथं विस्मर्यते ?

लक्ष्मणः—एष विन्ध्याटवीमुखे विराधसंवादः ।

सीता—अलं तावदेतेन । पश्यामि तावदार्यपुत्रस्वहस्तधृततालवृन्ता-ऽऽतपत्रमात्मनोऽत्याहितं दक्षिणारण्यपथिकत्वम् ।

रामः—

एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रिततरूणि तपोवनानि ।
येष्वातिथेयपरमा यमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥ २३ ॥

लक्ष्मणः—अयमविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्य-परिणद्धगोदावरीमुखकन्दरः संततमभिष्यन्दमानमेघमेदुरितनीलिमा-जनस्थानमध्यगो गिरिः प्रस्रवणोनाम ।

रामः—

स्मरसि सुतनु ! तस्मिन्पर्वते लक्ष्मणेन
प्रतिविहितसपर्यासुस्थयोस्तान्यहानि ।
स्मरसि सरसनीरां तत्रगोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि ॥ २४ ॥

लक्ष्मणः—एष पञ्चवट्यां शूर्पणखाविवादः।

सीता—हा आर्यपुत्र ! एतावत्ते दर्शनम्।

रामः—अयि वियोगत्रस्ते ! चित्रमेतत्।

सीता—यथा तथा भवतु। दुर्जनोऽसुखमुत्पादयति।

रामः—हन्त, वर्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति।

लक्ष्मणः—

अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्॥ २५॥

सीता—(सास्रमात्मगतम्।) अहो, दिनकरकुलानन्दन एवमपि मम कारणात् क्लान्त आसीत् ?

लक्ष्मणः—(रामं निर्वर्ण्य साकूतम्।) आर्य ! किमेतत् ?

अयं तावद्बाष्पस्त्रुटित इव मुक्तामणिसरो-
विसर्पन्धाराभिर्लुठति धरणीं जर्जरकणः।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति चिरमाध्मातहृदयः॥ २६॥

रामः—वत्स !

तत्कालप्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढः।
दुःखाग्निर्मनसि पुनर्विपच्यमानो-
हृन्मर्मव्रण इव वेदनां तनोति॥ २७॥

सीता—हा धिक् हा धिक्। अहमपि अतिभूमिंगतेन रणरणकेन आर्यपुत्रशून्यमिव आत्मानं पश्यामि।

लक्ष्मणः—( स्वगतम् ) भवतु । आक्षिपामि । ( चित्रं विलोक्य प्रकाशम् ) अथैतन्मन्वन्तरपुराणस्य तत्रभवतस्तातजटायुषश्चरित्रविक्रमोदाहरणम् ।

सीता—हा तात ! निर्व्यूढस्तेऽपत्यस्नेहः ।

रामः—हा तात ! काश्यप ! शकुन्तराज ! क्व नु खलु पुनस्त्वादृशस्य महतस्तीर्थभूतस्य साधोः संभवः ।

लक्ष्मणः—अयमसौ जनस्थानस्य पश्चिमतः कुञ्जवान्नाम पर्वतोदनुकबन्धाधिष्ठितो दण्डकारण्यभागः । तदिदमृष्यमूकपरिसरे मतङ्गाश्रमपदम् । तत्र श्रमणी नाम सिद्धा शबरतापसी । तदेतत्पम्पाभिधानं पद्मसरः ।

सीता—यत्र किलाऽऽर्यपुत्रेण विच्छिन्नामर्षधीरत्वं प्रमुक्तकण्ठं प्ररुदितमासीत् ।

रामः—देवि ! परं रमणीयमेतत्सरः ।

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाऽम्भः परिपतनोद्गमान्तराले
संदृष्टाः कुवलयिनो मया विभागाः ॥ २८ ॥

दिष्ट्या सोऽयं महाबाहुरञ्जनाऽऽनन्दवर्धनः ।
यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥ २९ ॥

सीता—वत्स ! एष स कुसुमितकदम्बताण्डवितबर्हिणः किंनामधेयो गिरिः । यत्रानुभावसौभाग्यमात्रपरिशेषसुन्दरश्रीर्मूर्छन्त्वया प्ररुदितेनावलम्बितस्तरुतल आर्यपुत्र आलिखितः ?

लक्ष्मणः—

सोऽयं शैलः ककुभसुरभिर्माल्यवान्नाम यस्मिन्
नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः।
आर्येणास्मिन् ..................................

रामः—

.........विरम विरमाऽलः परं न क्षमोऽस्मि
प्रत्यावृत्तः स पुनरिव मे जानकीविप्रयोगः॥ ३०॥

लक्ष्मणः—अतः परमार्यस्य तत्रभवतां राक्षसानां चाऽपरिसंख्यान्युत्तरोत्तराणि कर्माश्चर्याणि। परिश्रान्ता चेयमार्या। तद्विज्ञापयामि-विश्राम्यतामिति।

सीता—आर्यपुत्र! एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहलाया मम विज्ञापनीयमस्ति।

रामः—नन्वाज्ञापय।

सीता—जाने, पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहृत्य पवित्रनिर्मलशिशिरसलिलां भगवतीं भागीरथीं अवगाहिष्य इति।

रामः—वत्स लक्ष्मण!

लक्ष्मणः—एषोऽस्मि।

रामः—वत्स! 'अचिरादेव संपादनीयो दौहृद' इति संप्रत्येव गुरुभिः संदिष्टम्। तदस्खलितसंपातं रथमुपस्थापय।

सीता—आर्यपुत्र! युष्माभिरप्यागन्तव्यम्।

रामः—अयि कठिनहृदये! एतदपि वक्तव्यम्?

सीता—तेन हि प्रियं मे प्रियं मे।

लक्ष्मणः--यदाज्ञापयत्यार्यः। [ इति निष्क्रान्तः। )

रामः—प्रिये ! वातायनोपकण्ठे संविष्टा भव।

सीता—एवं भवतु। अपहृतास्मि परिश्रमनिद्रया।

रामः—तेन हि निरन्तरमवलम्बस्व मामनुगमनाय।

सीता—( निद्रां नाटयन्ती। ) अस्त्येतत्। आर्यपुत्र ! अस्त्येतत्।

( इति स्वपिति। )

रामः—कथं प्रियवचनैव प्रसुप्ता। ( निर्वर्ण्य )

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः॥ ३१॥

( प्रविश्य। )

प्रतीहारी—देव उपस्थितः।

रामः—अयि, कः ?

प्रतिहारी—आसन्नपरिचारको देवस्य दुर्मुखः।

रामः—( स्वगतम् ) शुद्धान्तचारी दुर्मुखः स मया पौरजानपदेष्व-पसर्पः प्रहितः। ( प्रकाशम्। ) आगच्छतु।

[ प्रतीहारी निष्क्रान्ता।

[ प्रविश्य। )

दुर्मुखः—( स्वगतम् हा कथमिदानीं देवीमन्तरणेदृशमचिन्तनीयं जनापवादं देवस्य कथयिष्यामि। अथवा नियोगः खलु मम मन्दभाग-धेयस्यैषः।

सीता—( उत्स्वप्नायते । ) आर्यपुत्र ! कुत्रासि ।

रामः—सेयमेव रणरणकदायिनी चित्रदर्शनाद्विरहभावना देव्याः स्वप्नोद्वेगं करोति । ( सस्नेहमङ्गमस्याः परामृशन् । )

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु य-
द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते ॥ ३२ ॥

दुर्मुखः—( उपसृत्य । ) जयतु देवः ।

रामः—ब्रूहि यदुपलब्धम् ।

दुर्मुखः—उपस्तुवन्ति देवं पौरजानपदा यथा विस्मारिता वयं महाराजं दशरथं रामदेवेनेति ।

रामः—अर्थवाद एवैषः । दोषं तु मे कथंचित्कथय येन प्रतिविधीयते ।

दुर्मुखः—( सास्रम् । ) शृणोतु महाराजः । एवमिव ।

रामः—अहह, अतितीव्रोऽयं वाग्वज्रः । ( इति मूर्च्छति । )

दुर्मुखः—आश्वसितु देवः ।

रामः—( आश्वस्य । )

हा हा धिक्परगृहवासदूषणं य-
द्वैदेह्याः प्रशमितमद्भुतैरुपायैः ।
एतत्तत्पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्वतः प्रसक्तम् ॥ ३३ ॥

तत्किमद्य मन्दभाग्यः करोमि । ( विमृश्य, सकरुणम् । ) अथवा किमेतत्—

सतां केनापि कार्येण लोकस्याराधनं परम् ।
तत्प्रतीतं हि तातेन मां च प्राणांश्च मुञ्चता ॥ ३४ ॥

संप्रत्येव च भगवता वसिष्ठेन संदिष्टम्। अपि च।

यत्सावित्रैर्दीपितं भूमिपालै-
र्लोकश्रेष्ठैः साधुचित्रं चरित्रम्।
मत्संबन्धात्कश्मला किंवदन्ती
स्याच्चेदस्मिन्हन्त धिङ्मामधन्यम् ॥ ३५ ॥

हा देवि देवयजनसंभवे! हा स्वजन्मानुग्रहपवित्रितवसुंधरे! हा मुनिजनकनन्दिनि! हा पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनि! हा राममयजीविते! हा महारण्यवासप्रियसखि! हा तातप्रिये! हा स्तोकवादिनि! कथमेवंविधायास्तवायमीदृशः परिणामः?

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥ ३५ ॥

(दुर्मुखं प्रति।) दुर्मुख! ब्रूहि लक्ष्मणम्। एष नूतनो राजा रामः समाज्ञापयति। (कर्णे।) एवमेवम्। इति।

दुर्मुखः—हा, कथमग्निपरिशुद्धाया गर्भस्थितपवित्रसंतानाया देव्या दुर्जनवचनादिदं व्यवसितं देवेन।

रामः—शान्तं पापम्, शान्तं पापम्। दुर्जना नाम पौरजानपदाः?

इक्ष्वाकुवंशोऽभिमतः प्रजानां
जातं च दैवाद्वचनीयबीजम्।
यच्चाद्भुतं कर्म विशुद्धिकाले
प्रत्येतु कस्तद्यदिदूरवृत्तम् ॥ ३६ ॥

तद्गच्छ।

दुर्मुखः—हा देवि! (इति निष्क्रान्तः।)

रामः—हा कष्टम्। अतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः।

शैशवात्प्रभृति पोषितां प्रियां
सौहृदादपृथगाश्रयामिमाम् ।
छद्मना परिददामि मृत्यवे
सौनिके गृहशकुन्तिकामिव ॥ ३७ ॥

तत्किमस्पृश्यः पातकी देवीं दूषयामि । ( इति सीतायाः शिरः समुन्नमय्य बाहुमाकृष्य ।)

अपूर्वकर्मचण्डालमयि मुग्धे ! विमुञ्च माम् ।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् ॥ ३८ ॥

( उत्थाय ।) हन्त हन्त, संप्रति विपर्यस्तो जीवलोकः । अद्याऽवसितं जीवितप्रयोजनं रामस्य । शून्यमधुना जीर्णारण्यं जगत् । असारः संसारः । काष्ठप्रायं शरीरम् । अशरणोऽस्मि । किं करोमि । का गतिः । अथवा—

दुःखसंवेदनायैव रामे चैतन्यमागतम् ।
मर्मोपघातिभिः प्राणैर्वज्रकीलायितं हृदि ॥ ३९ ॥

हा अम्ब अरुन्धति ! भगवन्तौ वसिष्ठविश्वामित्रौ ! भगवन्पावक ! हा देवि भूतधात्रि ! हा तात जनक ! हा मातः ! हा प्रियसख महाराज सुग्रीव ! सौम्य हनूमन् ! लङ्काधिपते विभीषण ! हा सखि त्रिजटे ! परिमुषिताः स्थ परिभूताः स्थ रामहतकेन । अथवा को नाम तेषामहमिदानीमाह्वाने ।

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना ।
मया गृहीतनामानः स्पृश्यन्त इव पाप्मना ॥ ४० ॥

जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।
यां देवयजने ! पुण्ये ! पुण्यशीलामजीजनः ॥ ४१ ॥

( इति रुदन्निष्क्रान्तः ।)

सीता— हा सौम्य आर्यपुत्र ! कुत्रासि । हा धिक् । दुःस्वप्नरणरणकविप्रलब्धा आर्यपुत्रशून्यमिवात्मानं पश्यामि । हा धिक् हा धिक् ।

एकाकिनीं प्रसुप्तां मामुज्झित्वा कुत्र गतो नाथः। भवतु। अस्मै कोपिष्यामि यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि। को ऽत्र परिजनः ।

[ प्रविश्य ]

दुर्मुखः—देवि ! कुमारलक्ष्मणो विज्ञापयति—'सज्जो रथः। तदारोहतु देवो' इति ।

सीता—इयमारूढास्मि । स्फुरति मे गर्भभारः। शनैर्गच्छामः ।

दुर्मुखः—इत इतो देवी ।

सीता—नमो रघुकुलदेवताभ्याम् ।

[ इति निष्क्रान्ताः सर्वे । ]

इति महाकवि श्रीभवभूतिविरचित उत्तररामचरिते

प्रथमोऽङ्कः

# द्वितीयोऽङ्कः

[ नेपथ्ये । ]

स्वागतं तपोधनायाः ।

[ ततः प्रविशत्यध्वगवेषा तापसी । ]

तापसी—अये वनदेवता फलकुसुमगर्भेण पल्लवार्घ्येण दूरान्मामुपतिष्ठते ।

[ प्रविश्य । ]

वनदेवता—[ अर्घ्यं वितीर्य । ]

यथेच्छाभोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।
तरुच्छाया तोयं यदपि तपसां योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥ १ ॥

तापसी—किमत्रोच्यते ?

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २ ॥

[ उपविशतः । ]

वनदेवता—कां पुनरत्रभवतीमवगच्छामि ।

तापसी—आत्रेय्यस्मि ।

वनदेवता—आर्ये आत्रेयि ! कुतः पुनरिहागम्यते । किंप्रयोजनो दण्डकारण्योपवनप्रचारः ?

आत्रेयी—

अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्यटामि ॥ ३ ॥

वनदेवता—यदा तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते। तत्कोऽयमार्यायाः प्रवासः ?

आत्रेयी—तस्मिन्हि महानध्ययनप्रत्यूह इत्येष दीर्घप्रवासोऽङ्गीकृतः।

वनदेवता—कीदृशः ?

आत्रेयी—तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्तमानं दारकद्वयमुपनीतम्। तत्खलु न केवलं तस्य, अपि तु तिरश्चामप्यन्तःकरणानि तत्त्वान्युपस्नेहयति।

वनदेवता—अपि तयोर्नामसंज्ञानमस्ति ?

आत्रेयी—तयैव किल देवतया तयोः कुशलवाविति नामनी च प्रभावश्चाख्यातः।

वनदेवता—कीदृशः प्रभावः ?

आत्रेयी—तयोः किल सरहस्यानि जृम्भकास्त्राणि जन्मसिद्धानीति।

वनदेवता—अहो नु भोश्चित्रमेतत्।

आत्रेयी—तौ च भगवता वाल्मीकिना धात्रीकर्मतः परिगृह्य पोषितौ रक्षितौ च। निर्वृत्तचौलकर्मणोस्तयोस्त्रयीवर्जमितरास्तिस्रो विद्याः सावधानेन परिनिष्ठापिताः। तदनन्तरं भगवतैकादशे वर्षे क्षात्रेण

कल्पेनोपनीय त्रयीविद्यामध्यापितौ। न त्वेताभ्यामतिदीप्तिप्रज्ञाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति। यतः—

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।
भवति हि पुनर्भूयान्भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदादयः॥ ४॥

वनदेवता—अयमध्ययनप्रत्यूहः ?

आत्रेयी—अन्यश्च।

वनदेवता—अथापरः कः ?

आत्रेयी—अथ स ब्रह्मर्षिरेकदा माध्यंदिनसवनाय नदीं तमसामनुप्रपन्नः। तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन वध्यमानं ददर्श। आकस्मिकप्रत्यवभासां देवीं वाचमानुष्टुभेन छन्दसा परिणतामभ्युदैरयत्।

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥ ५॥

वनदेवता—आम्नायादन्यत्र नूतनच्छन्दसामवतारः ?

आत्रेयी—तेन हि पुनः समयेन तं भगवन्तमाविर्भूतशब्दप्रकाशमृषिमुपसंगम्य भगवान्भूतभावनः पद्मयोनिरवोचत्—"ऋषे ! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि। तद्ब्रूहि रामचरितम्। अव्याहतज्योतिरार्षं ते चक्षुः प्रतिभातु। आद्यः कविरसि" इत्युक्त्वाऽन्तर्हितः। अथ स भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय।

वनदेवता—हन्त, पण्डितः संसारः।

आत्रेयी—तस्मादेव हि ब्रवीमि तत्र महानध्ययनप्रत्यूह इति ।

वनदेवता—युज्यते ।

आत्रेयी—विश्रान्तास्मि भद्रे । संप्रत्यगस्त्याश्रमस्यपन्थानं ब्रूहि ।

वनदेवता—इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण ।

आत्रेयी—( सास्त्रम् । ) अप्येतत्तपोवनम् ? अप्येषा पञ्चवटी ? अपि सरिदियं गोदावरी ? अप्ययं गिरिः प्रस्रवणः ? अपि जनस्थानवनदेवता त्वं वासन्ती ?

वनदेवता—तथैव तत्सर्वम् ।

आत्रेयी—हा वत्से जानकि !

स एष ते वल्लभशाखिवर्गः
प्रासङ्गिकीनां विषयः कथानाम् ।
त्वां नामशेषामपि दृश्यमानः
प्रत्यक्षदृष्टामिव नः करोति ॥ ६ ॥

वासन्ती—( सभयम् । स्वगतम् । ) कथं नामशेषेत्याह ?
( प्रकाशम् । )
किमत्याहितं सीता देव्याः ?

आत्रेयी—न केवलमत्याहितम् , सापवादमपि । ( कर्णे ) एवमिति

वासन्ती—हा दारुणो दैवनिर्घातः । ( इति मूर्च्छति । )

आत्रेयी—भद्रे ! समाश्वसिहि ।

वासन्ती —हा प्रियसखि ! ईदृशस्ते निर्माणभागः । हा रामभद्र ! । अथवा अलं त्वया । आर्ये आत्रेयि ! अथ तस्मादरण्यात्परित्यज्य निवृत्ते लक्ष्मणे सीतायाः किं वृत्तमिति काचिदासीत्प्रवृत्तिः ?

आत्रेयी—नहि नहि ।

वासन्ती--कष्टम्। आर्यारुन्धतीवसिष्ठाधिष्ठितेषु नः कुलेषु, जीवन्तीषु च वृद्धासु राज्ञीषु कथमिदं जातम्?

आत्रेयी--ऋष्यशृङ्गसत्रे गुरुजनस्तदासीत्। संप्रति परिसमाप्तं द्वादशवार्षिकं सत्रम्। ऋष्यशृङ्गेण च संपूज्य विसर्जिता गुरवः। ततो-भगवत्यरुन्धती-"नाहं वधूविरहितामयोध्यां गच्छामि" इत्याह। तदेव राममातृभिरनुमोदितम्। तदनुरोधाद्भगवतो वसिष्ठस्यापि श्रद्धा—"वाल्मीकितपोवनं गत्वा तत्र वत्स्यामः" इति।

वासन्ती—अथ स रामभद्रः किमाचारः?

आत्रेयी—तेन राज्ञा राजक्रतुरश्वमेधः प्रक्रान्तः।

वासन्ती—अहह धिक्। परिणीतमपि?

आत्रेयी--शान्तम्। नहि नहि।

वासन्ती—का तर्हि यज्ञे सहधर्मचारिणी।

आत्रेयी—हिरण्मयी सीताप्रतिकृति र्गृहिणीकृता।

वासन्ती—हन्त भोः—

वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति॥ ७॥

आत्रेयी—विसृष्टश्च वामदेवानुमन्त्रितो मेध्याश्वः। प्रकॢप्ताश्च तस्य यथाशास्त्रं रक्षितारः। तेषामधिष्ठाता लक्ष्मणात्मजश्चन्द्रकेतुर्दत्त-दिव्यास्त्रसंप्रदायश्चतुरङ्गसाधनान्वितोऽनुप्रहितः।

वासन्ती—( सहर्षकौतुकास्त्रम्। ) कुमारलक्ष्मणस्यापि पुत्र इति मातः! जीवामि।

आत्रेयी—अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताड-मब्रह्मण्यमुद्घोषितम्। ततः— न राजाऽपचारमन्तरेण प्रजानामकाल-

मृत्युः संचरतीत्यात्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाऽशरीरिणी वागुदचरत्—

"शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः ।
शीर्षच्छेद्यः स ते राम ! तं हत्वा जीवय द्विजम्" ॥ ८ ॥

इत्युपश्रुत्य कृपाणपाणिः पुष्पकमधिरुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः संचारं समारब्धवान् ।

वासन्ती—शम्बूको नामाधोमुखो धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति । अपि नाम रामभद्रः पुनरिदं वनमलंकुर्यात् ?

आत्रेयी—भद्रे ! गम्यतेऽधुना ।

वासन्ती—आर्ये आत्रेयि ! एवमस्तु । कठोरश्च दिवसः—

कण्डूलद्विपगण्डपिण्डकषणाकम्पेन संपातिभिः
घर्मस्रंसितबन्धनैश्च कुसुमैरर्चन्ति गोदावरीम् ।
छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥ ९ ॥

( इति परिक्रम्य निष्क्रान्ते । )

इति शुद्धविष्कम्भः ।

[ ततः प्रविशति सदयोद्यतखड्गो रामभद्रः । ]

रामः—

हे हस्त ! दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य बाहुरसि निर्भरगर्भखिन्न-
सीताविवासनपटोः करुणा कुतस्ते ॥ १० ॥

( कथंचित्प्रहृत्य । )

कृतं रामसदृशं कर्म । अपि जीवेत्स ब्राह्मणपुत्रः ?

लवः—( स्वगतम् । ) अहो पुण्यानुभावदर्शनोऽयं महापुरुषः ।

आश्वास इव भक्तीनामेकमायतनं महत् ।
प्रकृष्टस्येव धर्मस्य प्रसादो मूर्तिसुन्दरः ॥ ९ ॥

आश्चर्यम् !

विरोधो विश्रान्तः, प्रसरति रसो निर्वृतिघनः,
तदौद्धत्यं क्वापि व्रजति, विनयः प्रह्वयति माम् ।
झटित्यस्मिन्दृष्टे किमिति परवानस्मि, यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ १० ॥

रामः—तत्किमयमेकपद एव मे दुःखविश्रामं ददात्युपस्नेहयति च कुतोऽपि निमित्तादन्तराऽऽत्मानम्? अथवा, स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिपिद्धमेतत् ।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ ११ ॥

लवः—चन्द्रकेतो ! क एते ?

चन्द्रकेतुः—प्रियवयस्य ! ननु तातपादाः ।

लवः—ममापि धर्मतस्तथैव । यतः प्रियवयस्येति भवतोक्तम् । किंतु, चत्वारः किल भवन्त्येवंव्यपदेशभागिनस्तत्रभवन्तो रामायणकथापुरुषाः । तद्विशेषं ब्रूहि ।

चन्द्रकेतुः—ज्येष्ठतात इत्यवेहि ।

लवः—( सोल्लासम् । ) कथं रघुनाथ एव । दिष्ट्या सुप्रभातमद्य

यदयं देवो दृष्टः। (सविनयं निर्वर्ण्य ।) तात ! प्राचेतसाऽन्तेवासी लवोऽभिवादयते ।

रामः—आयुष्मन् ! एह्येहि । ( सस्नेहमालिङ्ग्य । ) अयि वत्स ! कृतमत्यन्तविनयेन । अङ्गेन मामपरिश्लथं परिरम्भस्व ।

परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः ।
नन्दयति चन्द्रचन्दननिष्यन्दजडस्तव स्पर्शः ॥ १२ ॥

लवः—( स्वगतम् । ) ईदृशो मां प्रत्यमीषामकारणस्नेहः । मया पुनरेभ्य एवाऽभिद्रोग्धुमज्ञेनाऽऽयुधपरिग्रहः कृतः । (प्रकाशम् ।) मृष्यन्तां त्विदानीं लवस्य बालिशतां तातपादाः ।

रामः—किमपराद्धं वत्सेन ?

चन्द्रकेतुः— अश्वाऽऽनुयात्रिकेभ्यस्तातप्रतापाऽऽविष्करणमुपश्रुत्य वीरायितमनेन ।

रामः—नन्वयमलंकारः क्षत्रियस्य ।

न तेजस्तेजस्वी प्रसृतमपरेषां विषहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥ १३ ॥

चन्द्रकेतुः—अमर्षोऽप्यस्यैव शोभते महावीरस्य । पश्यन्तु हि तातपादाः प्रियवयस्यनियुक्तेन जृम्भकास्त्रेण विक्रम्य स्तम्भितानि सर्वसैन्यानि ।

रामः—( सविस्मयखेदं निर्वर्ण्य । स्वगतम् । ) अहो, वत्सस्य ईदृशः प्रभावः । ( प्रकाशम् । ) वत्स ! संह्रियतामस्त्रम् । त्वमपि चन्द्रकेतो ! निर्व्यापारतया विलक्षणानि सान्त्वय बलानि ।

(लवः प्रणिधानं नाटयति ।)

चन्द्रकेतुः—यथा निर्दिष्टम् । ( इति निष्क्रान्तः । )

लवः—तात ! प्रशान्तमस्त्रम् ।

रामः—सरहस्यप्रयोगसंहारजृम्भकास्त्राणि दिष्ट्या वत्सस्यापि संपद्यन्ते ।

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्रं शरदस्तपांसि ।
एतान्यदर्शन्गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥ १४ ॥

अथैतामस्त्रमन्त्रोपनिषदं भगवान्कृशाश्वः परःसहस्राधिकसंवत्सरपरिचर्यानिरतायाऽन्तेवासिने कौशिकाय प्रोवाच। स भगवान्मह्यमिति गुरुपूर्वानुक्रमः । कुमारस्य कुतः संप्रदाय इति पृच्छामि ?

लवः—स्वतःप्रकाशान्यावयोरस्त्राणि ।

रामः—( विचिन्त्य । ) किं न संभाव्यते । प्रकृष्टपुण्योपादानकः कोऽपि महिमा स्यात् । द्विवचनं तु कथम् ?

लवः—भ्रातरावावां यमौ ?

रामः—स तर्हि द्वितीयः क्व ?

( नेपथ्ये । )

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु, किमात्थ ?— सखे ! तथेति ।
अद्यास्तमेतु भुवनेषु च राजशब्दः
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥ १५ ॥

रामः—

अथ कोऽयमिन्द्रमणिमेचकच्छवि-
र्ध्वनिनैव बद्धपुलकं करोति माम् ।
नवनीलनीरधरधीरगर्जित-
क्षणबद्धकुड्मलकदम्बडम्बरम् ? ॥ १६ ॥

लवः—अयमसौ मम ज्यायानाऽऽर्यः कुशो नाम भरताऽऽश्रमात्प्रति-निवृत्तः ।

रामः—( सकौतुकम् । ) तर्हि वत्स ! इत एवैतमाह्वयाऽऽयुष्मन्तम् ।

लवः—यदाज्ञापयति । ( इति निष्क्रान्तः । )

( ततः प्रविशति कुशः । )

कुशः—( सक्रोधं कृतधैर्यं धनुरास्फाल्य । )

दत्तेन्द्राऽभयदक्षिणैर्भगवतो वैवस्वतादा मनो-
र्दृप्तानां दमनाय दीपितनिजक्षत्रप्रतापाऽग्निभिः ।
आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो-
दीप्ताऽस्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः ॥ १७ ॥

( विकटं परिक्रामति । )

रामः—कोऽप्यस्मिन्क्षत्रियपोतके पौरुषातिरेकः । तथाहि—

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो—
वीरोरसः किमयमेत्युत दर्प एव ?॥ १८ ॥

लवः—( उपसृत्य । ) जयत्वार्यः ।

कुशः—नन्वायुष्मन्! किमियं वार्ता युद्धं युद्धमिति ?

लवः—यत्किंचिदेतत्। आर्यस्तु दृप्तं भावमुत्सृज्य विनयेन वर्तताम्।

कुशः—किमर्थम् ?

लवः—यदत्र देवो रघुनन्दनः स्थितः। स रामायणकथानायको ब्रह्मकोशस्य गोप्ता।

कुशः—आशंसनीयपुण्यदर्शनः स महात्मा। किंतु स कथमस्माभिरुपगन्तव्य इति संप्रधारयामि ?

लवः—यथैव गुरुस्तथोपसदनेन।

कुशः—कथं हि नामैतम् ?

लवः—अत्युदात्तः सुजनश्चन्द्रकेतुरौर्मिलेयः 'प्रियवयस्येति' सख्येन मामुपतिष्ठते। तेन संबन्धेन धर्मतस्तात एवायं राजर्षिः।

कुशः—संप्रत्यवचनीयो राजन्येऽपि प्रश्रयः।

( उभौ परिक्रामतः। )

लवः—पश्यत्वेनमार्यो महापुरुषमाकारानुभावगाम्भीर्यसंभाव्यमानविविधलोकोत्तरसुचरिताऽतिशयम्।

कुशः—( निर्वर्ण्य। )

अहो प्रासादिकं रूपमनुभावश्च पावनः।
स्थाने रामायणकविर्देवीं वाचमवीवृधत् ॥ १६ ॥

तात! प्राचेतसान्तेवासी कुशोऽभिवादयते।

रामः—एह्येह्यायुष्मन् !

अमृताऽऽध्मातजीमूतस्निग्धसंहननस्य ते ।
परिष्वङ्गाय वात्सल्यादयमुत्कण्ठते जनः ॥ २० ॥

( परिष्वज्य । स्वगतम् । ) तत्किमित्ययं च दारकः ?

अङ्गादङ्गात्सृत इव निजस्नेहजो देहसारः
प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेकः ।
सान्द्राऽऽनन्दक्षुभितहृदयप्रस्रवेणाऽवसिक्तो-
गाढाऽऽश्लेषः स हि मम हिमच्योतमाशंसतीव ॥ २१ ॥

लवः—ललाटंतपस्तपति घर्मांशुः । तदत्र सालवृक्षच्छायायां मुहूर्तमासनपरिग्रहं करोतु तातः ।

रामः— यदभिरुचितं वत्सस्य ।

( परिक्रम्य यथोचितमुपविशन्ति । )

रामः—( स्वगतम् । )

अहो प्रश्रययोगेऽपि गतिस्थित्याऽऽसनादयः ।
साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च ॥ २२ ॥

वपुरवियुतसिद्धा एव लक्ष्मीविलासाः
प्रतिकलकमनीयां कान्तिमुद्भेदयन्ति ।
अमलिनमिव चन्द्रं रश्मयः स्वे यथा वा
विकसितमरविन्दं बिन्दवो माकरन्दाः ॥ २३ ॥

भूयिष्ठं च रघुकुलकौमारमनयोः पश्यामि ।

कठोरपारावतकण्ठमेचकं
वपुर्वृषस्कन्धसुबन्धुरांसयोः ।
प्रसन्नसिंहस्तिमितं च वीक्षितं
ध्वनिश्च माङ्गल्यमृदङ्गमांसलः ॥ २४ ॥

(निपुणं निरूपयन् ।) अये, न केवलमस्मद्वंशसंवादिन्याकृतिः—

अपि जनकसुतायास्तच्च तच्चाऽनुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो -
रभिनवशतपत्रश्रीमदाऽऽस्यं प्रियायाः ॥ २५ ॥

शुक्लाच्छदन्तच्छविसुन्दरेयं
सैवोष्ठमुद्रा स च कर्णपाशः ।
नेत्रे पुनर्यद्यपि रक्तनीले
तथापि सौभाग्यगुणः स एव ॥ २६ ॥

( विचिन्त्य । ) तदेतत्प्राचेतसाध्युषितमरण्यं यत्र किल देवी परित्यक्ता । इयं चानयोराकृतिर्वयोऽनुभावश्च । यत्स्वतःप्रकाशान्यस्त्राणीति च, तत्राऽपि स्मरामि खलु तदपि चित्रदर्शनप्रासङ्गिकं शस्त्राऽभ्यनुज्ञानं प्रवृद्धं स्यात् । न ह्यसंप्रदायिकान्यस्त्राणि पूर्वेषामपि शुश्रुमः । अयं विस्मयसंप्लूयमानसुखदुःखातिशयो हृदयस्य मे विप्रलम्भः । यमाविति च भूयिष्ठमात्मसंवादः । जीवद्धयाऽपत्यचिह्नो हि देव्या गर्भिणीभाव आसीत् । ( सास्रम् । )

परां कोटिं स्नेहे परिचयविकासादधिगते
रहो विस्रब्धाया अपि सहजलज्जाजडदृशः ।
मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया ॥ २७ ॥

( रुदित्वा ।) तत्किमेतौ पृच्छामि केनचिदुपायेन ?

लवः—तात! किमेतत ?

वाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम् ।
अवश्यायाऽवसिक्तस्य पुण्डरीकस्य चारुताम् ॥ २८ ॥

कुशः—अयि वत्स !

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति ।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमेवं त्वं पृच्छस्यनधिगतरामायण इव ॥ २९ ॥

रामः—(स्वगतम् ।) अये, तटस्थ आलापः । कृतं प्रश्नेन । मुग्धहृदय ! कोऽयमाकस्मिकस्ते संप्लवाधिकारः ? एवं निर्भिन्नहृदयावेगः शिशुजनेनाप्यनुकम्पितोऽस्मि । भवतु, तावदन्तरयामि । ( प्रकाशम् ।) वत्सौ ! रामायणं रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिष्यन्दः प्रशस्तिरादित्यवंशस्य । तत्कौतूहलेन यत्किंचिच्छ्रोतुमिच्छामि ।

कुशः—कृत्स्न एव संदर्भोऽस्माभिरावृत्तः । स्मृतिप्रत्युपस्थितौ तावदिमौ बालचरितस्यान्ते द्वौ श्लोकौ ।

रामः—उदीरयतं वत्सौ ।

कुशः—

प्रिया तु सीता रामस्य दाराः पितृकृता इति ।
गुणै रूपगुणैश्चापि प्रीतिर्भूयोऽप्यवर्धत ॥ ३० ॥

तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत् ।
हृदयं त्वेव जानाति प्रीतियोगं परस्परम् ॥ ३१ ॥

रामः—कष्टमतिदारुणो हृदयमर्मोद्घातः । हा देवि ! एवं किलैतदासीत् । अहो निरन्वयविपर्यासविप्रलम्भस्मृतिपर्यवसायिनस्तावकाः संसारवृत्तान्ताः ।

क्व तावानाऽऽनन्दो निरतिशयविस्रम्भबहुलः
क्व वान्योन्यप्रेम क्व च नु गहनाः कौतुकरसाः ।
सुखे वा दुःखे वा क्व नु खलु तदैक्यं हृदययो-
स्तथाप्येष प्राणः स्फुरति न तु पापो विरमति ॥ ३२ ॥

भोः, कष्टम् ।

प्रियागुणसहस्राणां क्रमोन्मीलनतत्परः ।
य एव दुःसहः कालस्तमेव स्मारिता वयम् ॥ ३३ ॥

लवः—अयं तु चित्रकूटवर्त्मनि मन्दाकिनीविहारे सीतादेवीमुद्दिश्य रघुपतेः श्लोकः—

त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमायतः ।
यस्याऽयमभितः पुष्पैः प्रवृष्ट इव केसरः ॥ ३४ ॥

रामः—( सलज्जास्मितस्नेहकरुणम् । ) अति हि नाम मुग्धः शिशुजनः । विशेषतस्त्वरण्यचरः । हा देवि ! स्मरसि वा तस्य तत्समयविस्रम्भाऽतिप्रसङ्गस्य ?

( स्तम्भित इव स्थित्वा । सकरुणम् । ) अहो नु खलु भोः,

चिरं ध्यात्वा ध्यात्वा निहित इव निर्माय पुरतः
प्रवासे चाश्वासं न खलु न करोति प्रियजनः ।
जगज्जीर्णाऽरण्यं भवति च कलत्रेऽप्युपरते
कुकूलानां राशौ तदनु हृदयं पच्यत इव ॥ ३५ ॥

( नेपथ्ये । )

वसिष्ठो वाल्मीकिर्दशरथमहिष्योऽथ जनकः
सहैवाऽरुन्धत्या शिशुकलहमाकर्ण्य सभयाः ।
जराग्रस्तैर्गात्रैरथ खलु सुदूराऽऽश्रमतया
चिरेणाऽऽगच्छन्ति त्वरितमनसो विश्लथजटाः ॥ ३६ ॥

रामः—कथं भगवत्यरुन्धती वसिष्ठोऽम्बाश्च जनकश्चात्रैव ? कथं खलु ते द्रष्टव्याः ? ( सकरुणं विलोक्य । ) तातजनकोऽप्यत्रैवाऽऽयात-इति वज्रेणेव ताडितोऽस्मि मन्दभाग्यः ।

संबन्धस्पृहणीयताप्रमुदितैर्ज्येष्ठैर्वसिष्ठादिभि-
र्दृष्ट्वापत्यविवाहमङ्गलविधौ तत्तातयोः संगमम् ।
पश्यन्नीदृशमीदृशः पितृसखं वृत्ते महावैशसे
दीर्ये किं न सहस्रधाहमथवा रामेण किं दुष्करम् ॥ ३७ ॥

( नेपथ्ये । )

भोः भोः, कष्टम् ।

अनुभावमात्रसमवस्थितश्रियं
सहसैव वीक्ष्य रघुनाथमीदृशम् ।
प्रथमप्रबुद्धजनकप्रबोधिता-
विधुराः प्रमोहमुपयान्ति मातरः ॥ ३८ ॥

रामः—

जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।
तत्राऽप्यकरुणे पापे वृथा वः करुणा मयि ॥ ३९ ॥

यावत्संभावयामि । ( इत्युत्तिष्ठति ।)

कुशलवौ— इत इतस्तातः ।

( सकरुणं परिक्रम्य निष्क्रान्ताः सर्वे )

इति षष्ठोऽङ्कः ।

# सप्तमोऽङ्कः ।

( ततः प्रविशति लक्ष्मणः )

लक्ष्मणः— भोः ! किं नु खलु भगवता वाल्मीकिना सब्रह्मक्षत्रपौरजानपदाः प्रजाः सहाऽस्माभिराहूय कृत्स्न एव सदेवाऽसुरतिर्यङ्निकायः सचराचरो भूतग्रामः स्वप्रभावेन संनिधापितः। आदिष्टश्चाहमार्येण— 'वत्स लक्ष्मण ! भगवता वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमन्त्रिताः स्मः। गङ्गातीरमातोद्यस्थानमुपगम्य क्रियतां समाजसंनिवेशः' इति । कृतश्च मर्त्याऽमर्त्यस्य भूतग्रामस्य समुचितस्थानसंनिवेशो मया । अयं तु—

राज्याऽऽश्रमनिवासोऽपि प्राप्तकष्टमुनिव्रतः ।
वाल्मीकिगौरवादार्य इत एवाऽभिवर्तते ॥ १ ॥

( ततः प्रविशति रामः । )

रामः— वत्स लक्ष्मण ! अपि स्थिता रङ्गप्राश्निकाः ?

लक्ष्मणः— अथ किम् ।

रामः— इमौ पुनर्वत्सौ कुमारचन्द्रकेतुसमां प्रतिपत्तिं लम्भयितव्यौ ।

लक्ष्मणः— प्रभुस्नेहप्रत्ययात्तथैव कृतम् । इदं चास्तीर्णं राजासनम् । तदुपविशत्वार्यः ।

रामः— (उपविश्य ।) प्रस्तूयतां भोः ।

सूत्रधारः— (प्रविश्य ।) भगवान्भूताऽर्थवादी प्राचेतसः स्थावरजङ्गमं जगदाज्ञापयति—"यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं

वचनामृतं करुणाद्भुतरसं च किंचिदुपनिबद्धम्। तत्र काव्यगौरवादव-धातव्यमिति।

रामः—एतदुक्तं भवति। साक्षात्कृतधर्माणो महर्षयः। तेषामृतंभराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद्व्याहन्यन्त इति नहि शङ्कनीयानि।

(नेपथ्ये।)

हा आर्यपुत्र ! कुमार लक्ष्मण ! एकाकिनीमशरणामासन्नप्रसव-वेदनामरण्ये हताशां श्वापदा अभिलषन्ति। हा इदानीं मन्दभाग्या भागीरथ्यामात्मानं निक्षिपामि।

लक्ष्मणः— कष्टं बतान्यदेव किमपि।

सूत्रधारः—

विश्वंभरात्मजा देवी राज्ञा त्यक्ता महावने।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति॥ २॥

(इति निष्क्रान्तः।)

-:०:-

इति प्रस्तावना।

रामः— (सावेगम्) देवि ! देवि ! लक्ष्मणमवेक्षस्व।

लक्ष्मणः— आर्य ! नाटकमिदम्।

रामः—हा देवि ! दण्डकारण्यवासप्रियसखि ! एष ते रामाद्विपाकः।

लक्ष्मणः— आर्य ! आश्वस्य दृश्यताम्। प्रबन्धस्त्वार्षः।

रामः— एष सज्जोऽस्मि वज्रमयः।

(ततः प्रविशति उत्सङ्गितैकैकदारकाभ्यां पृथिवीगङ्गाभ्यामवलम्बिता प्रमुग्धा सीता ।)

रामः-- वत्स ! असंविज्ञातपदनिबन्धने तमसीवाऽहमद्य प्रविशामि । धारय माम् ।

देव्यौ—

समाश्वसिहि कल्याणि दिष्ट्या वैदेहि ! वर्धसे ।
अन्तर्जले प्रसूताऽसि रघुवंशधरौ सुतौ ॥ ३ ॥

सीता— ( आश्वस्य ) दिष्ट्या दारकौ प्रसूतास्मि । हा आर्यपुत्र !

लक्ष्मणः— ( पादयोर्निपत्य ) आर्य दिष्ट्या वर्धामहे । कल्याणप्ररोहो रघुवंशः । ( विलोक्य ) हा कथं क्षुभितवाष्पोत्पीडनिर्भरः प्रमुग्ध एवार्यः? ( वीजयति )

देव्यौ— वत्से ! समाश्वसिहि ।

सीता— ( समाश्वस्य ) भगवत्यौ ! के युवाम्? मुञ्चतम् ।

पृथिवी— इयं ते श्वशुरकुलदेवता भागीरथी ।

सीता— नमस्ते भगवति !

भागीरथी— चारित्रोचितां कल्याणसंपदमधिगच्छ ।

लक्ष्मणः— अनुगृहीताः स्मः ।

भागीरथी— इयं ते जननी विश्वंभरा ।

सीता— हा अम्ब ! ईदृश्यहं त्वया दृष्टा ।

पृथिवी— एहि पुत्रि ! वत्से सीते !

( उभौ आलिङ्ग्य मूर्छतः )

लक्ष्मणः— ( सहर्षम् ) कथमार्या गङ्गापृथिवीभ्यामभ्युपपन्ना ?

रामः— दिष्ट्या खल्वेतत् । करुणान्तरं तु वर्तते ।

भागीरथी—अत्रभवती विश्वंभरा व्यथते—इति जितमपत्यस्नेहेन । यद्वा सर्वसाधारणो ह्येष मनसो मूढग्रन्थिरान्तरश्चेतनावताभुपप्लवः संसारतन्तुः । सखि भूतधात्रि ! वत्से वैदेहि ! समाश्वसिहि ।

पृथिवी—( आश्वस्य । ) देवि ! सीतां प्रसूय कथमाश्वसिमि ?

सोढश्चिरं राक्षसमध्यवास-
स्त्यागो द्वितीयस्तु सुदुःसहोऽस्याः ।

गङ्गा—

को नाम पाकाभिमुखस्य जन्तु-
द्वाराणि दैवस्य पिधातुमीष्टे ॥ ४ ॥

पृथिवी—भगवति भागीरथि ! युक्तमेतत्सर्वं वो रामभद्रस्य ?

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।
नाऽहं न जनको नाग्निर्न तु वृत्तिर्न संततिः ॥ ५ ॥

सीता— हा आर्यपुत्र ! स्मरसि ?

पृथिवी— आः, कस्तवार्यपुत्रः ?

सीता— ( सलज्जास्रम् । ) यथाऽम्बा भणति ।

रामः— अम्ब पृथिवि ! ईदृशोऽस्मि ।

गङ्गा— भगवति वसुंधरे ! शरीरमसि संसारस्य । तत्किमसंविदानेव जामात्रे कुप्यसि ?

घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
र्लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ।

इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः
कृत्स्नो लोकस्तदिह विषमे किं स वत्सः करोतु ॥ ६ ॥

लक्ष्मणः— अव्याहताऽन्तःप्रकाशा हि देवताः सत्त्वेषु ।

गङ्गा— तथाप्येषतेऽञ्जलिः ।

रामः— अम्ब ! अनुवृत्तस्त्वया भगीरथकुले प्रसादः ।

पृथिवी— नित्यं प्रसन्नास्मि तव । किं त्वसाऽऽवापातदुःसहः स्नेह-संवेगः । न पुनर्न जानामि सीतास्नेहं रामभद्रस्य ।

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः ।
लोकोत्तरेण सत्त्वेन प्रजापुण्यैश्च जीवति ॥ ७ ॥

रामः— सकरुणा हि गुरवो गर्भरूपेषु ।

सीता— ( रुदती कृताञ्जलिः । ) नयतु मामात्मनोऽङ्गेषु विलयमम्बा ।

गङ्गा— किं ब्रवीषि । अविलीना वत्से ! संवत्सरसहस्राणि भूयाः ।

पृथिवी— वत्से ! अवेक्षणीयौ ते पुत्रौ ।

सीता— किमेताभ्यामनाथाभ्याम् ?

रामः— हृदय ! वज्रमसि ।

गङ्गा— कथं वत्सौ सनाथावप्यनाथौ ?

सीता— कीदृशं मे अभाग्यायाः सनाथत्वम् ?

देव्यौ—

जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे ।
आवयोरपि यत्सङ्गात्पवित्रत्वं प्रकृष्यते ॥ ८ ॥

लक्ष्मणः— आर्य ! श्रूयताम् ।

रामः— लोकः शृणोतु।

( नेपथ्ये कलकलः। )

रामः— अद्भुततरं किमपि।

सीता— किमित्याबद्धकलकलं प्रज्वलितमन्तरिक्षम्?

देव्यौ— ज्ञातम्।

भृशाऽश्वः कौशिको राम इति येषां गुरुक्रमः।
प्रादुर्भवन्ति तान्येव शस्त्राणि सह जृम्भकैः॥ ९॥

( नेपथ्ये। )

देवि सीते! नमस्तेऽस्तु गतिर्नः पुत्रकौ हि ते।
आलेख्यदर्शनादेव ययोर्दाता रघूद्वहः॥ १०॥

सीता—दिष्ट्या अस्त्रदेवता एताः। आर्यपुत्र! अद्यापि ते प्रसादाः परिस्फुरन्ति।

लक्ष्मणः—उक्तमासीदार्येण—"सर्वथैतानि त्वत्प्रसवमुपस्थास्यन्तीति"।

देव्यौ—

नमो वः परमाऽस्त्रेभ्यो धन्याः स्मो वः परिग्रहात्।
काले ध्यातैरुपस्थेयं वत्सयोर्भद्रमस्तु वः॥ ११॥

रामः—

क्षुभिताः कामपि दशां कुर्वन्ति मम संप्रति।
विस्मयाऽऽनन्दसंदर्भजर्जराः करुणोर्मयः॥ १२॥

देव्यौ— मोदस्व वत्से! मोदस्व। रामभद्रतुल्यौ ते पुत्रकाविदानीं संवृत्तौ।

सीता— भगवत्यौ ! क एतयोः क्षत्रियोचितविधिं कारयिष्यति ?

रामः—

एषा वसिष्ठशिष्याणां रघूणां वंशनन्दिनी।
कष्टं सीतापि सुतयोः संस्कर्तारं न विन्दति ॥ १३ ॥

गङ्गा — भद्रे ! किं तवाऽनया चिन्तया। एतौ हि वत्सौ स्तन्यत्यागात्परेण भगवतो वाल्मीकेरर्पयिष्यामि।

वसिष्ठ एव ह्याचार्यो रघुवंशस्य संप्रति।
स एव चानयोर्ब्रह्मक्षत्रकृत्यं करिष्यति ॥ १४ ॥
यथा वसिष्ठाङ्गिरसौ ऋषिः प्राचेतसस्तथा।
जनकानां रघूणां च वंशयोरुभयोर्गुरुः ॥ १५ ॥

रामः— सुविचिन्तितं भगवत्या।

लक्ष्मणः— आर्य ! सत्यं विज्ञापयामि। तैस्तैरुपायैरिमौ वत्सौ कुशलवावुत्प्रेक्षे।

एतौ हि जन्मसिद्धास्त्रौ प्राप्तप्राचेतसावुभौ।
आर्यतुल्याकृती वीरौ वयसा द्वादशाब्दकौ ॥ १६ ॥

रामः— वत्सावित्येवाहं परिप्लवमानहृदयः प्रमुग्धोऽस्मि।

पृथिवी— एहि वत्से ! पवित्रीकुरु रसातलम्।

रामः—प्रिये ! लोकान्तरं गतासि ?

सीता— नयतु मामात्मनोऽङ्गेषु विलयमम्बा। न सहिष्ये ईदृशं जीवलोकस्य परिभवमनुभवितुम्।

लक्ष्मणः— किमुत्तरं स्यात् ?

पृथिवी— मन्नियोगतः स्तन्यत्यागं यावत् पुत्रयोरवेक्षस्व। परेण तु यथा रोचिष्यते तथा करिष्यामि।

गङ्गा— एवं तावत्।

(इति निष्क्रान्ते देव्यौ सीता च।)

रामः— कथं प्रतिपन्न एव तावत्। हा चारित्रदेवते! लोकान्तरे पर्यवसितासि। (इति मूर्छति।)

लक्ष्मणः— भगवन्वाल्मीके! परित्रायस्व परित्रायस्व। एष ते काव्यार्थः।

(नेपथ्ये।)

अपनीयतामातोद्यम्। भो जङ्गमस्थावराः प्राणभृतो मर्त्यामर्त्याः, पश्यन्त्विदानीं वाल्मीकिनाभ्यनुज्ञातं पवित्रमाश्चर्यम्।

लक्ष्मणः— (विलोक्य।)

मन्थादिव क्षुभ्यति गाङ्गमम्भो-
व्याप्तं च देवर्षिभिरन्तरिक्षम्।
आश्चर्यमार्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुपैति ॥ १७ ॥

(नेपथ्ये।)

अरुन्धति! जगद्वन्द्ये गङ्गापृथ्व्यौ जुषस्व नौ।
अर्पितेयं तवाऽऽवाभ्यां सीता पुण्यव्रता वधूः ॥ १८ ॥

लक्ष्मणः— अहो आश्चर्यमाश्चर्यम्। आर्ये! पश्य पश्य। कष्टमद्यापि नोच्छ्वसित्यार्यः।

( ततः प्रविशत्यरुन्धती सीता च । )

अरुन्धती —

त्वरस्व वत्से वैदेहि !मुञ्च शालीनशीलताम् ।
एहि जीवय मे वत्सं सौम्यस्पर्शेन पाणिना ॥ १६ ॥

सीता— ( ससंभ्रमं स्पृशति । ) समाश्वसितु समाश्वसित्वार्यपुत्रः ।

रामः— ( समाश्वस्य सानन्दम् ।) भोः, किमेतत् ? (दृष्ट्वा सहर्षाद्भुतम् ।) कथं देवी जानकी ? ( सलज्जम् । ) अये, कथमम्बाऽरुन्धती ? कथं सर्वे ऋष्यश्रृङ्गादयोऽस्मद्गुरवः ?

अरुन्धती— वत्स ! एषा भागीरथी रघुकुलदेवता देवी गङ्गा सुप्रसन्ना ।

( नेपथ्ये । )

जगत्पते रामभद्र ! स्मर्यतामालेख्यदर्शने मां प्रत्याऽऽत्मवचनम्—"सा त्वमम्ब ! स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भव" इति । तदनृणाऽस्मि ।

अरुन्धती— इयं ते श्वश्रूर्भगवती वसुंधरा ।

( नेपथ्ये । )

उक्तमासीदायुष्मता वत्सायाः परित्यागे—'भगवति वसुंधरे ! श्लाघ्यां दुहितरमवेक्षस्व जानकीम्' इति । तदधुना कृतवचनास्मि ।

रामः— कृतापराधोऽपि भगवति ! त्वयानुकम्पयितव्यो रामः प्रणमति ।

अरुन्धती— भो भोः पौरजानपदाः ! इयमधुना वसुंधराजाह्नवीभ्यामेवं प्रशस्यमाना मया चाऽरुन्धत्या समर्पिता पूर्वं भगवता वैश्वान-

रेण निर्णीतपुण्यचारित्रा सब्रह्मकैश्चद्देवैः स्तुता सावित्रकुलवधूर्देवयजनसंभवा जानकी परिगृह्यताम्। कथमिह भवन्तो मन्यन्ते ?

लक्ष्मणः— आर्य ! एवमम्बयारुन्धत्या निर्भर्त्सिताः पौरजानपदाः कृत्स्नश्च भूतग्राम आर्यां नमस्कुर्वन्ति। लोकपालाः सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते।

अरुन्धती— जगत्पते रामभद्र !

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम्।
हिरण्मय्याः प्रतिकृतेः पुण्यां प्रकृतिमध्वरे ॥ २० ॥

सीता— (स्वगतम्।) अपि जानात्यार्यपुत्रः सीताया दुःखं परिमार्ष्टुम् ?

रामः—यथा भगवत्यादिशति।

लक्ष्मणः—कृतार्थोऽस्मि।

सीता—प्रत्युज्जीवितास्मि।

लक्ष्मणः—आर्ये! अयं लक्ष्मणः प्रणमति।

सीता—वत्स ! ईदृशस्त्वं चिरं जीव।

अरुन्धती—भगवन्वाल्मीके ! उपनयेदानीं सीतागर्भसंभवौ रामभद्रस्य कुशलवौ। ( इति निष्क्रान्ता।)

रामलक्ष्मणौ—दिष्ट्या तथैवैतत्।

सीता—क्व तौ पुत्रकौ ?

( ततः प्रविशति वाल्मीकिः कुशलवौ च।)

वाल्मीकिः—वत्सौ ! एष वां रघुपतिः पिता। एष लक्ष्मणः कनिष्ठतातः। एषा सीता जननी। एष राजर्षिजनको मातामहः।

सीता—(सहर्षकरुणाद्भुतं विलोक्य।) कथं तातः ? कथं जातौ ?

वत्सौ—हा तात ! हा अम्ब ! हा मातामह !

रामलक्ष्मणौ—(सहर्षमालिङ्ग्य ।) ननु वत्सौ ! युवां प्राप्तौ स्वः ?

सीता— एहि जात कुश ! एहि जात लव ! चिरस्य मां परिष्वजेथां लोकान्तरादागतां जननीम् ।

कुशलवौ—(तथा कृत्वा ।) धन्यौ स्वः ।

सीता—भगवन् ! एषाऽहं प्रणमामि ।

वाल्मीकिः—वत्से ! एवमेव चिरं भूयाः ।

( नेपथ्ये ।)

"उत्खातलवणो मधुरेश्वरः प्राप्तः ।"

लक्ष्मणः—सानुषङ्गाणि कल्याणानि ।

रामः—सर्वमिदमनुभवन्नपि न प्रत्येमि । यद्वा प्रकृतिरियमभ्युदयानाम् ।

वाल्मीकिः—रामभद्र ! उच्यतां किं ते भूयः प्रियमुपहरामि ?

रामः—अतः परमपि प्रियमस्ति ? किं त्विदं भरतवाक्यमस्तु—

पाप्मभ्यश्च पुनाति वर्धयति च श्रेयांसि सेयं कथा
माङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च ।
तामेनां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
शब्दब्रह्मविदः कवेः परिणतां प्राज्ञस्य वाणीमिमाम् ॥ २१ ॥

( निष्क्रान्ताः सर्वे । )

इति सप्तमोऽङ्कः ।

इति महाकवि श्री भवभूति प्रणीतं
उत्तररामचरितं समाप्तम्

-*-

# अनर्घराघवम्

## द्वितीयोऽङ्कः

### * प्रभातवर्णनम् *

( ततः प्रविशति यजमानशिष्यः ।)

शिष्यः— अये, प्रभातप्रायेव रजनी । तथा हि—

तमोभिः पीयन्ते गतवयसि पीयूषवपुषि
ज्वलिष्यन्मार्तण्डोपलपटलधूमैरिव दिशः ।
सरोजानां कर्षन्नलिमयमयस्कान्तमणिवत्
क्षणादन्तःशल्यं तपति पतिरद्यापि न रुचाम् ॥ १ ॥

अपि च ।

जाताः पक्वपलाण्डुपाण्डुमधुरच्छायाकिरस्तारकाः
प्राचीमंकुरयन्ति किंचन रुचो राजीवजीवातवः ।
लूतातन्तुवितानवर्तुलमितो बिम्बं दधच्चुम्बति
प्रातः प्रोषितरोचिरम्बरतलादस्ताचलं चन्द्रमाः ॥ २ ॥

(सर्वतोऽवलोक्य च ।)

दिङ्मण्डलीमुकुटमण्डनपद्मराग-
रत्नांऽकुरे किरणमालिनि गर्भितेऽपि ।
सौखप्रसुप्तिकमधुव्रतचक्रवाल-
वाचालपङ्कजवनीसरसाः सरस्यः ॥ ३ ॥

अपि च ।

प्राचीविभ्रमकर्णिकाकमलिनीसंवर्तिकाः संप्रति
द्वे तिस्रो रमणीयमम्बरमणेर्धामुच्चरन्ते रुचः ।

सूक्ष्मोष्ण्छ्वासमपीदमुत्सुकतया संभूय कोषाद्बहि-
र्निष्क्रामद्भ्रमरौघसंभ्रमभरादम्भोजमुज्जृम्भते ॥ ४ ॥

अपि च।

एकद्विप्रभृतिक्रमेण गणनामेषामिवास्तं यतां
कुर्वाणा समकोचयद्दशशतान्यम्भोजसंवर्तिकाः।
भूयोऽपि क्रमशः प्रसारयति ताः संप्रत्यमूनुद्यतः
संख्यातुं सकुतूहलेव नलिनी भानोः सहस्रं करान् ॥ ५ ॥

अपि च।

प्रत्यासन्नसुरेन्द्रसिन्धुरशिरःसिन्दूरसान्द्रारुणा
यत्तेजस्त्रसरेणवो वियदितः प्राचीनमातन्वते।
शङ्के संप्रति यावदभ्युदयते तत्तर्कुटङ्कोन्मृजा-
रज्यद्बिम्बरजश्छटावलयितो देवस्त्विषामीश्वरः ॥ ६ ॥

( पुरोऽवलोक्य ।) कथमिदमुदयाचलमौलिमाणिक्यमर्कमण्डलमद्यापि न विहायस्तलमलंकरोति। तदस्मद्गुरोर्वितायमानयज्ञस्य कुलपतेः कौशिकस्यादेशात्समिदाहरणाय प्रस्थितोऽस्मि। तत्त्वरितं गच्छामि।
( इति परिक्रामति ।)

## * अहल्योद्धार *

( प्रविश्य संभ्रान्तो बटुः ।)

बटुः— आर्य शुनःशेफ ! किमप्याश्चर्यं भीषणं च वर्तते।

शुनशेफः—(सचमत्कारं परिवृत्य ।) सखे पशुमेढ्र ! किमाश्चर्यं भीषणं च वर्तते ?

पशुमेढ्रः— अद्य, राम इति कोऽपि क्षत्रियकुमारआगत इति श्रुत्वा कुतूहलेन धावतस्तपोवनपर्यन्तपरिस्थिता प्रस्तरपुत्रिका सत्य-

मानुषीभूय ममैव संमुखं परापतिता। तां प्रेक्ष्य उत्तरासङ्गवल्कलमप्युज्झित्वा पलायितोऽस्मि।

शुनःशेफः— ( विहस्य।) सखे ! साधु कृतम्। दिष्ट्या हि जीवतः पुनरावृत्तिः।

पशुमेढ्रः— तद्रक्षतु मामार्य एतस्या दुष्टराक्षस्या मुखात्।

शुनःशेफः— ( सस्मित मुत्थाप्याऽऽलिंग्य च। ) वयस्य! शृणोषि भगवतो गौतमस्य महर्षे रहल्यां नाम धर्मदारान् ?

पशुमेढ्रः— या जनकवंशपुरोहितस्य तत्रभवतः शतानन्दस्य जननी ? ततस्ततः—

शुनशेफः— सेयं पुरा पुरुहूतखण्डितचरित्रा तस्य दीर्घतपसो मुनेर्मन्युना निजमेव तदिन्द्रियदौर्बल्यमेवं विवर्तमानमनुभवन्ती संप्रत्यस्य रघुराजपुत्रस्य तेजसा तस्मादन्धकारान्निरमुच्यत। तदलमावेगेन।

पशुमेढ्रः— ( उन्मील्य चक्षुषी सर्वतोऽवलोक्य। ) अहो आश्चर्यम् ! आर्यस्य प्रसादेन पुनरपि जीवलोके प्रविष्टोऽस्मि। तथापि शङ्काज्वरोऽद्यापि न मां परित्यजति। तदार्य शुनःशेफ ! मुहूर्तं विश्रम्यताम्।

शुनःशेफः—सखे ! भयमिति किमेतद्ब्राह्मणस्य ? तत्पर्यवस्थापय आत्मानम्।

( इत्युपविशतः। )

पशुमेढ्रः— (चिरं विमृश्य निःश्वस्य च सविस्मयम्।) कथं विषयमृगतृष्णासलज्जलया भगवतो हरेरपि हरिणता विटप्यते ?

शुनःशेफः— ( विहस्य । ) साधु ब्रवीषि । अल्पीयान्खल्वयं लोकः । कथमैहिकसुखाध्यवसायाद्वै अमूर्भूयस्यो रात्रयः पराहण्यन्ते। किं तु मनोहारिभिराहार्यै राह्रियमाणलोचनद्वितयस्यापि न जनो विवेकमङ्कुशयितुमधीष्टे । किं पुनर्नयनसहस्रतयस्य तादृशि विभवे मरुतां पतिः ? चक्षुःप्रीतिमुद्भवन्तीमनूद्भवन्ति चाऽपराणि कुसुमचापचापलानि ।

पशुमेढ्रः— ( विहस्य।) मन्ये एतस्या एव मुनिगृहिण्याः पुण्यपरिणामोऽत्र रामभद्रस्य प्रवासे कारणम् ?

शुनःशेफः— इदं तावत्प्रथमम् ।

पशुमेढ्रः— ( साभ्यर्थनम् ) आर्य ! द्वितीय मपि श्रोतु मनेन तव वचनेन पर्युत्सुकोऽस्मि ।

शुनःशेफः— सखे ! त्वयि किमकथनीयं नाम । अस्ति किष्किन्धायां पुरंदरस्य नन्दनो बालिर्नाम प्लवगराजः । तं च रजनीचरचक्रवर्तिना दशकंधरेण सह प्रवृत्तमैत्रीकमवलोक्य वानराच्छभल्लगोलाङ्गूलप्रभृतीनामाचार्यः सर्वामात्यानुमतो जाम्बवानवादीत्—

पशुमेढ्रः— ( सकौतुकम् ) ततस्ततः—

शुनःशेफः— ततश्च, "राजन्! मायाविनी खल्वियं राक्षसजातिः । विशेषेण महेन्द्रावस्कन्दकन्दलितविक्रमः पितृवैरी तवायं रावणः। अपि च त्वदीयदोर्मूलसंपीडनगलितपौरुषो न विश्वविजयीति स्वयमाशङ्कनीयः । नापि सामन्ताऽन्तरजिघृक्षायामन्तरावर्तिनि समुद्रे लघुसमुत्थः । तदनेन विराद्धमण्डलेन सहासुरविजयिना मैत्रमनर्थानुबन्धि । किं च सर्वथेयमनुपकारिणी पुलस्त्यापत्येषु प्रीतिरिति भगवानिहोदाहरणं हरिणाङ्कशेखरः । तथा हि—

उक्षा रथो भूषणमस्थिमाला भस्माङ्गरागो गजचर्म वासः ।
एकालयस्थेऽपि धनाधिनाथे सख्यौ दशेयं त्रिपुरान्तकस्य ॥ ७ ॥

पशुमेढ्रः— (सहासम्) अहो स्थविरभल्लूकस्य मन्त्रोपन्यासः परिहास-कुशलता च । ततस्ततः—

शुनःशेफः— ततश्च तद्वचनं "जराप्रलपितम्" इत्युपहसति हरीश्वरे उपांशु तदनुमत्या महामात्यस्य केसरिणः पुत्रो हनुमान्कुमारं सुग्रीव-मादाय ऋष्यमूकं नाम पर्वतदुर्गमनुप्रविष्टः ।

पशुमेढ्रः— (साकूतम्।) आर्य ! योऽसौ मारुतिः 'श्वेतामल्लः' इति श्रूयते?

शुनःशेफः— अथ किम् ।

पशुमेढ्रः— (सविचिकित्सम्) आर्य ! यथा तथा भवतु । स्वामी स्वाम्येव । तं परित्यज्य न सदृशस्तादृशस्य महानुभावस्य प्रतिकूल-परिग्रहः ।

शुनःशेफः— (विहस्य ।) पुरैव किलाऽयमाञ्जनेयो भगवतः सहस्र-किरणाद्व्याकरणविद्यामधीयानस्तदात्मजन्मनो वानरयोनेः सुग्रीवस्य साहायकमभिप्रायज्ञो गुरुदक्षिणीचकार ।

पशुमेढ्रः— (सानन्दम्) हुं । तदुचितमेव गुरुपुत्रः सब्रह्मचारी वाऽनु-वर्त्यते । ततस्ततः—

शुनःशेफः— ततश्चाऽहिभयोपजापजर्जरं सुहृद्गृहमुपश्रुत्य राक्षस-राजः खरदूषणत्रिशिरोभिर्महामात्यैरधिष्ठितमात्मबलैकदेशं सिन्धो-रुदीचि कूले बालिप्रतिग्रहाय प्राहिणोत् ।

पशुमेढ्रः— कथमपरिहीनमित्रधर्मोऽपि स राक्षसः ?

शुनःशेफः— सखे ! किमुच्यते । रावणः खल्वसौ—

प्रियाकर्तुं स्वस्रे भवनिजशिरःकृतनरस-
प्रहृष्यद्रोमा यः स परमिह लङ्कापरिवृढः ।

विलक्षव्यापारं किमपि ददृशुर्यस्य दशमं
शिरस्ते मूर्धानः क्षणधृतपुनर्जन्मसुभगाः ॥ ८ ॥

पशुमेढ्रः— ( सकौतुकम् ) ततस्ततः—

शुनःशेफः— ततः सुकेतुसुता नागसहस्रबलधारिणी ताडका नाम राक्षसी तस्मादनीकादागत्य मनुष्यमण्डलविहारकौतुकात् इमामस्मदीयां भूमिमधिवसति।

पशुमेढ्रः— ( सकौतुकम्।) नागसहस्रबला स्त्री अस्तीत्यश्रुतपूर्वं खल्वेतत्। ततस्ततः—

शुनःशेफः— ततश्च श्रौतस्य विधेः प्रत्यूहमस्याः शङ्कमानः कुलपतिरिमौ दाशरथी रामलक्ष्मणावानीतवान्।

पशुमेढ्रः— जाने रामभद्र इति कोऽपि राक्षसानामुपर्यवतीर्णः खल्वसौ?

शुनःशेफः— सखे! एवमेतत्, रामभद्र इति कोऽप्ययं चतुरक्षरो-राक्षसरक्षासिद्धमन्त्रः। विशेषेण पुनरिदानीं भगवता कौशिकेन ब्रह्मज्योतिषस्तादृशं विवर्तमाश्चर्यं दिव्यास्त्रमन्त्रपारायणमध्यापितः।

पशुमेढ्रः— मन्ये मन्त्रमयीभिरस्त्रदेवताभिः समं बलातिबले शक्ती अपि रामे संक्रमिष्यतः?

शुनःशेफः— अथ किम्। तदपि वृत्तमेव।

पशुमेढ्रः— आर्य! ननु भणामि यदि निजा एव शक्तयो निजा-एवास्त्रविद्याः। तत्किमित्यात्मनो विघ्नोपशमे राघवस्य गौरवमुत्पादयति तत्रभवान्कौशिकः?

शुनःशेफः— सखे! अनभिज्ञोऽसि। स्वयं प्रयोगादन्तेवासिभिर्विहितः प्रयोगो महिमानमाचार्याणामुपचिनोति। पश्य—

स्थानेषु शिष्यनिवहैर्विनियुज्यमाना
विद्या गुरुं हि गुणवत्तरमातनोति ।
आदाय शुक्तिषु बलाहकविप्रकीर्णै-
रत्नाकरो भवति वारिभिरम्बुराशिः ॥ ९ ॥

किं च दीक्षिष्यमाणा न क्रुध्यन्तीति रक्षितारं क्षत्रियमुपाददते ।

पशुमेढ्रः— आर्य ! शोभनं मन्त्रयसे । अन्यदपि किमपि प्रष्टुकामोऽस्मि।

शुनशेफः—किं तत् ?

पशुमेढ्रः— सर्वथा निगूढमपि वानराणां षाड्गुण्यं कथमार्येण प्रतिपन्नम् ?

शुनःशेफः—सखे ! सर्वमेतदयोध्यायात्रायां समाधिमयेन चक्षुषा साक्षात्कृतत्रिभुवनवृत्तान्तस्य तातविश्वामित्रस्य मुखादश्रौषम् । (सर्वतोऽवलोक्य ।) अये, प्रभातिकी भुवनस्य लक्ष्मीः । तथा हि--

प्रत्यग्रज्वलितैः पतङ्गमणिभिर्नीराजिता भानवः
सावित्राः कुरुविन्दकन्दलरुचः प्राचीमलंकुर्वते ।
प्रौढध्वान्तकरालितस्य वपुषश्छायाछलेन क्षणा-
दप्रक्षालितनिर्मलं जगदहो निर्मोकमुन्मुञ्चति ॥ १० ॥

अपि च ।

पीत्वा भृशं कमलकुड्मलशुक्तिकोषा-
दोषातनीं तिमिरवृष्टिमथ स्फुटन्तः ।
निर्यन्मधुव्रतकदम्बमिषाद्वमन्ति
बिभ्रन्ति कारणगुणानिव मौक्तिकानि ॥ ११ ॥

अपि च ।

विकसितसंकुचितपुनर्विकस्वरेष्वम्बुजेषु दुर्लक्ष्याः ।
कलिकाः कथयति नूतनविकासिनीर्मधुलिहामघः ॥ १२ ॥

( आदित्यमण्डलं निर्वर्ण्य । )

कटुभिरपि कठोरचक्रवाकोत्करविरहज्वरशान्तिशीतवीर्यैः ।
तिमिरहृतमयं महोभिरञ्जयति जगन्नयनौघमुष्णभानुः ॥१३॥

तदनुजानीहि मां समिदाहरणाय ।

पशुमेढ्रः—'अहमपि क्षत्रियकुमारयोर्दर्शने उत्कण्ठितोऽस्मि । तत् कथय कुत्र प्रेक्षे ?

शुनःशेफः—(विहस्य ।) नन्वेतावेत्र यज्ञवाटमुत्तरेण विहारभूमिषु क्रीड़तः । तदुपेत्य निःशङ्कमवलोकय ।

( इति निष्क्रान्तौ ।)

इति विष्कम्भकः ।

## * सिद्धाश्रमवर्णनम् *

(ततः प्रविशतो रामलक्ष्मणौ ।)

रामः—अहो विचित्रमिदमायतनं सिद्धाश्रमपदं नाम भगवतो-गाधिनन्दनस्य ।

तत्ताद्दक्तृणपूलकोपनयनक्लेशाच्चिरद्वेषिभि-
र्मेध्या वत्सतरी विहस्य बटुभिः सोल्लुण्ठमालभ्यते ।
अप्येष प्रतनूभवत्यतिथिभिः सोच्छ्वासनासापुटै-
रापीतो मधुपर्कपाकसुरभिः प्राग्वंशजन्माऽनिलः ॥ १४ ॥

लक्ष्मणः—आर्य ! किलाऽत्रैव—

देवः कौस्तुभकिंजल्कनीलोत्पलमसौ हरिः ।
स्वयं किमपि तत्तेपे तपः कपटवामनः ॥ १५ ॥

इत्थमेतन्महातीर्थमध्यासीना द्विजातयः ।
अकुतोभयसंचाराः षट्कर्माणि प्रयुञ्जते ॥ १६ ॥

( अन्यतश्च दृष्ट्वा ।) आर्य !

पश्यैते पशुबन्धवेदिवलयैरौदुम्बरीदन्तुरै-
र्नित्यव्यञ्जितगृह्यतन्त्रविधयो रम्या गृहस्थाश्रमाः ।
यत्रामी गृहमेधिनः प्रचलितस्वाराज्यसिंहासना-
वैतानेषु कपीटयोनिषु पुरोडाशं वषट्कुर्वते ॥ १७ ॥

रामः—( सहर्षस्मितम् ) वत्स ! इतोऽपि तावत्कृतार्थयावश्चक्षुषी । प्रसन्नपावनोऽयमृषीणां समवायः । इदममीषाम्—

पूरयित्वेव सर्वाङ्गमतिरिक्ताः शिराततीः ।
जटारूपेण बिभ्राणैः शिरोभिर्गहनं सदः ॥ १८ ॥

किं च ।

तपःकृशतरैरङ्गैः स्नष्टुमाकारितैरिव ।
सायं प्रातरमी पुण्यमग्निहोत्रं प्रयुञ्जते ॥ १६ ॥

( इति परिक्रामतः । )

लक्ष्मणः—( सहासम् । ) आर्य ! रमणीयमितो वर्तते ।

बालेयतण्डुलविलोपकदर्थिताभि-
रेताभिरग्निशरणेषु सधर्मिणीभिः ।
तत्त्रासहेतुमपि दण्ड मुदस्यमान-
माघ्रातुमिच्छति मृगे मुनयो हसन्ति ॥ २० ॥

रामः—( परिक्रामन्सकौतुकानुरागम् ।)वत्स ! इतस्तावत्—

आर्द्रप्रसूतिरियमङ्गनयज्ञवेदि-
र्नेदिष्ठमेव हरिणी तृणुते तृणं च ।

वल्लीयतापसकुमारकरोपनीत-
नीवारनिर्वृतमपत्यमवेक्षते च ॥ २१ ॥

अपि च ।

विष्वक्तपोधनकुमारसमर्प्यमाण-
श्यामाकतण्डुलहृतां च पिपीलिकानाम् ।
श्रेणीभिराश्रमपथाः प्रथमानचित्र-
पत्रावलीवलयिनो मुदमुद्वहन्ति ॥ २२ ॥

लक्ष्मणः--अहो पशूनामप्यपत्यवात्सल्यम्! अहो शिशूनामपि सत्कर्मताच्छील्यम्!

रामः--(अन्यतोऽवलोक्य ।)

मुनिविनियोगविलूनप्ररूढमृदुशाद्वलानि बर्हींषि ।
गोकर्णतर्णकोऽयं तर्णोत्युपकण्ठकच्छेषु ॥ २३ ॥

(इति परिक्रामतः ।)

लक्ष्मणः--आर्य!

इयमेभिरालवालैः पदे पदे ग्रन्थिलासु कुल्यासु ।
तीव्रतमा जलवेणिः प्रवहति विश्रम्य विश्रम्य ॥ २४ ॥

रामः--वत्स! साधु दृष्टम् ।

आलवालवलयेषु भूरुहां मांसलस्तिमितमन्तरान्तरा ।
केरलीचिकुरभङ्गिभङ्गुरं सारणीषु पुनरम्बु दृश्यते ॥ २५ ॥

तदेहि । भगवतीं कौशिकीमालोकयन्तौ मुहूर्तमात्रमात्मानं पुनीमहे । (परिक्रम्यावलोक्य च ।)कश्चित्सांक्रामिकोऽपि विशेषो नैसर्गिकमतिशेते । तथा हि—

अङस्वच्छस्वादुप्रकृतिरुपहृतेन्द्रियगणो-
गुणो यद्यप्यासामयमयुतसिद्धो विजयते।
तथाप्युत्कर्षाय स्फुरति सरितामाश्रमसदा-
मिदानीं वानीरद्रुमकुसुमजन्मा परिमलः॥ २६॥

लक्ष्मणः--आर्य! पुरस्तादनुकौशिकीतीरमालोकय।

तैर्मेध्याजननव्रतपूर्णयिभिर्व्यूहैर्बटूनामियं
सिक्ता नित्यवसन्तविभ्रमवती रम्या पलाशावली।
एतस्यां हरिणारिपाणिजसृणिश्रेणिश्रियः कोरका-
गोपायन्ति तपोवनं वनकरिक्रीडाकराकर्षणात्॥ २७॥

( नेपथ्ये। )

"रामभद्र! कियच्चिरमवलोकनेन कृतार्थीक्रियन्ते तपोवनविहार-भूमयः। संप्रति हि—

परिणमयति ज्योतिर्वृत्त्या यजूंषि रुचां पतिः
किमपि शमिनः सावित्राख्यं रहस्यमुपासते।
गुरुरयमनुष्ठास्यन्माध्यंदिनीं सवनक्रिया-
मिह मखविधौ नेदीयांसं भवन्तमपेक्षते" ॥ २८॥

रामः--( अश्रुतमभिनीय सानुरागम्। )
धारांस्त्रीनभिषुण्वते विदधते वन्यैः शरीरस्थिती-
रैणेय्यां त्वचि संविशन्ति वसते चापि त्वचस्तारवीः।
तत्पश्यन्ति च धाम नाभिपततो यच्चामेणे चक्षुषी
धन्यानां विरजस्तमा भगवती चर्येयमाह्लादते॥ २९॥

( नेपथ्ये पुनस्तदेव पठ्यते। )

रामः--( श्रुत्वा ससंभ्रममूर्ध्वमवलोक्य च। ) कथं गगनमध्यमध्यारूढो-

निदाघदीधितिः ? वत्स ! तदेहि । यज्ञवाटमधिष्ठाय क्रमेण कृताह्निकस्य भगवतः कौशिकस्य प्रत्यनन्तरीभवावः ।

( इति परिक्रामतः । )

लक्ष्मणः—( सर्वतो दृष्ट्वा । ) आर्य !

उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपल-
ज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः ।
भीमोष्मप्लवमानसूर्यकिरणक्रूरप्रकाशा दृशो-
रायुष्कर्म समापयन्ति धिगमूर्मध्याह्नशून्या दिशः ॥ ३० ॥

अन्तिकतमा चेयं यज्ञवाटभूमिः । तदेतदेव न्यग्रोधच्छायामण्डपमध्यासीना ऋत्विजः प्रत्यवेक्षामहे । गलितयौवने पुनरहनि भगवन्तं द्रक्ष्यावः ।

रामः—एवमस्तु ।

( इति परिक्रम्य नाट्येनोपविशतः ।)

लक्ष्मणः—( पार्श्वतोऽवलोक्य ।) आर्य !

मध्ये व्योम क्रीडयित्वा मयूखान्भानोर्बिम्बे लम्बमाने क्रमेण ।
स्वैरं स्वैरं मूलतः पादपानां पश्य च्छायाः कश्चिदाकर्षतीव ॥३१॥

रामः—( समन्तादवलोक्य ।) वत्स ! मध्यंदिनमतिक्रान्तमिति दिनमप्यतिक्रान्तमेव । पश्य—

गगनशिखरमुदयाद्रेरधिरूढाः कष्टमर्करथहरयः ।
अस्तमहीधरमधुना झटिति सुखेनावरोहन्ति ॥ ३२ ॥

लक्ष्मणः—आर्य ! नूनमद्य रक्षांसि परापतिष्यन्ति । यदयमध्वरवेदिकासंनिधानं ते शुनःशेफमुखेन भगवानुपाध्यायः प्रशास्ति ।

रामः—( सरोषाहंकारम् ।) वत्स! यद्येवं स्यात्—

कल्पान्तकर्कशकृतान्तभयंकरं मे
निष्प्रघ्नतः क्रतुविघातकृताममीषाम् ।
नीराक्षसां वसुमतीमपि कर्तुमद्य
पुण्याहमङ्गलमिदं धनुरादधातु ॥ ३३ ॥

लक्ष्मणः—( विहस्य । ) कथं रजनीचरचक्रविनाशोत्कण्ठविसंस्थुलमार्यहृदयमदीर्घदर्शिनं भगवन्तं कौशिकमपि संभावयति ।

अविद्याबीजविध्वंसादयमार्षेण चक्षुषा ।
कालौ भूतभविष्यन्तौ वर्तमानमवीविशत् ॥ ३४ ॥

रामः—किमुच्यते ? तत्रभवान्विश्वामित्रः—

प्रज्ञातब्रह्मतत्त्वोऽपि स्वर्गीयैरेष खेलति ।
गृहस्थसमयाचारप्रक्रांतैः सप्ततन्तुभिः ॥ ३५ ॥

अपि च ।

आर्द्रीकृतो विनयनम्रमहेन्द्रमौलि-
मन्दारदाममकरन्दरसैरिवायम् ।
प्रक्रान्तकुण्डलितनूतनभूतसर्ग-
स्त्रैशङ्कवं चरितमद्भुतमाततान ॥ ३६ ॥

लक्ष्मणः—( पुरोऽवलोक्य सहर्षम् । )

आभिरध्वरचर्याभिः श्रौतमर्थं कृतार्थयन् ।
अये कुलपतिः सोऽयमित एवाभिवर्तते ॥ ३७ ॥

( ततः प्रविशति दीक्षितवेषो विश्वामित्रः । )

रामः—( निर्वर्ण्य । सबहुमानम् । ) वत्स लक्ष्मण ! पश्य ।

कर्मणः श्रूयमाणस्य व्यञ्जनैरधिकोज्ज्वलाम् ।
तपस्तेजोमयीं लक्ष्मीमद्य पुष्णाति मे गुरुः ॥ ३८ ॥

विश्वामित्रः—(परिक्रामन्सहर्षम् ।) हन्त । कृतकृत्यप्रायमात्मानं पश्यामः । यतः ।

निर्वृत्तो बहु तावदध्वरभुजामातर्पणोऽयं विधि-
र्दायादेन समं सुकेतुदुहिता चाद्यैव घानिष्यते ।
पाणीकृत्य पुनर्वृषध्वजधनुर्भङ्गैकशुल्कां वधू-
मैक्ष्वाके सुरकार्यदिक्षु चलति स्वास्थ्यं विधातास्महे ॥ ३९ ॥

( रामलक्ष्मणावुत्थायोपसर्पतः )

विश्वामित्रः—( राममतिचिरं निर्वर्ण्य सस्नेहकौतुकम् ।)

एष वैहारिकं वेषमादधानो धनुर्धरः ।
तपःश्रमान्तरमस्माकममृतैरिव लिम्पति ॥ ४० ॥

उभौ—( उपसृत्य । ) भगवन् ! दाशरथी रामलक्ष्मणावभिवादयेते ।

विश्वामित्रः—( आलिङ्ग्य ।) वत्सौ ! किमन्यदाशास्महे ।

युवाभ्यामभिनिर्वृत्तयोगक्षेमस्य वज्रिणः ।
ऐश्वर्यप्रक्रियामात्रकृतार्थाः सन्तु हेतयः ॥ ४१ ॥

( उभौ तूष्णीमधोमुखौ स्तः ।)

विश्वामित्रः—( विहस्य ।) वत्सौ ! समन्तादुपशीलितोऽयं संनिवेशः । कच्चिदस्मदीयास्तपोवनभूमयो रमयन्ति वामुपस्नेहयति वा गार्हस्थ्यमृषीणाम् ?

उभौ—( सप्रश्रयम् ।) भगवन् !

रम्यमेतदरम्यं वा कः परिच्छेत्तुमर्हति ।
किं तु लुयातिगं चित्तमद्य नौ पश्यतोऽभूत् ॥ ४२ ॥

( इति सर्वे यथोचितमुपविशन्ति ।

विश्वामित्रः—(साकूतस्मितम्।) वत्सौ !

इह वनेषु स कौतुकवामनो मुनिरतप्त तपांसि पुरातनः।
तमिव धामलोक्य तपस्विनो नयनमद्य मनागुदमीमिलन् ॥ ४३ ॥

(उभौ मुहूर्तमुन्मनीभवतः।)

## * दिवसावसानवर्णनम् *

विश्वामित्रः—(स्वगतम्) अये, किमप्युत्साहवर्धनाय प्राग्भवीयमनुस्मारितमन्तःकरणनयोः। तदेतावदस्तु। अन्यतः प्रक्षिपामि। (प्रत्यगवलोक्य प्रकाशं ससंभ्रमम्।) कथमुदयगिरिकाश्मीरकुङ्कुमकेदारस्य प्रभातसंध्यालतायाः प्रथमस्तबको गभस्तिमाली हस्ताहस्तिकया कुतूहलिनीभिर्दिगङ्गनाभिर्वारुणीं यावदुपनीतः। (सनिर्वेदं च।)

यातोऽस्तमेष चरमाचलचूडचुम्बी
पङ्केरुहप्रकरजागरणप्रदीपः।
आः सर्वतः स्फुरतु, कैरवमाः पिबन्तु
ज्योत्स्नाकरम्भमुदरंभरयश्चकोराः ॥ ४४ ॥

(सर्वतोऽवलोक्य।)

अयमपि खरयोषित्कर्णकाषायमीष-
च्छिस्तृमरतिमिरोर्णाजर्जरोपान्तमर्चिः।
मदकलकलविङ्कीकाकुनान्दीकरेभ्यः
क्षितिरुहशिखरेभ्यो भानुमानुच्चिनोति ॥ ४५ ॥

अपि च।

मन्त्रसंस्कारसंपन्नास्तन्वदौदन्वतीरपः।
एतत्त्रयीमयं ज्योतिरादित्याख्यं निमज्जति ॥ ४६ ॥

रामः—(सर्वतो निरूप्य।) वत्स लक्ष्मण !

तापनैरेव तेजोभिः प्लुष्टनिर्वाणमेचकाः।
दिशो जाताः प्रतीची तु समुदाचरति क्रमात् ॥ ४७ ॥

किं च।

कांचिद्बिभ्रति भूतिमाश्रमभुवो वैतानवैश्वानर-
ज्वालोपप्लवमानधूमवलभीविभ्रान्तदिग्भित्तयः।
श्रूयन्ते बटवस्तृतीयसवनस्वाध्यायदीर्घानपि
स्पर्धाबन्धमनोहरं प्रति मुहुः स्वान्द्राघयन्तः स्वरान् ॥४८॥

विश्वामित्रः—वत्स राघव !

उन्मुक्ताभिर्दिवसमधुना सर्वतस्ताभिरेव
स्वच्छायाभिर्निचुलितमिव प्रेक्ष्यते विश्वमेतत्।
पर्यन्तेषु ज्वलति जलधौ रत्नसानौ च मध्ये
चित्राङ्गीयं रमयति तमःस्तोमलीला धरित्री ॥ ४६ ॥

लक्ष्मणः—( सनिर्वेदम्। )

तेजोमयं तमोमयमन्यतरस्यां तदेव दिक्चक्रम्।
किमपि विचित्रा धात्रा सृष्टिरियं भुवनकोषस्य॥ ५०॥

( सर्वतोऽवलोक्य।)

चूडारत्नैः स्फुरद्भिर्विषधरविवराण्युज्ज्वलान्युज्ज्वलानि
प्रेक्ष्यन्ते चक्रवाकीमनसि निविशते सूर्यकान्तात्कृशानुः।
किं चामी शल्ययन्तस्तिमिरमुभयतो निर्भराहस्तमिस्रा-
संघट्टोत्पिष्टसंध्याकणनिकरपरिस्पर्धिनो भान्ति दीपाः ॥ ५१ ॥

रामः—( विलोक्य।)

विश्वं चाक्षुषमस्तमस्ति हि तमःकैवल्यमौपाधिक-
प्राच्यादिव्यवहारबीजविरहाद्दिङ्मात्रमेव स्थितम्।
गृह्यन्ते भयहेतवः पटुभिरप्यक्षान्तरैर्भाति च
ध्वान्तेनातिघनेन वस्तु वचसा ज्ञातः स्वरेणामुकः ॥ ५२ ॥

किं च।

घनतरतिमिरघुणोत्करजग्धानामिव पतन्ति काष्ठानाम् ।
छिद्रैरमीभिरंशुभिः किरणव्याजेन चूर्णानि ॥ ५३ ॥

## * ताडकादिवधः *

( नेपथ्ये कलकलः ।)
( सर्वे ससंभ्रममाकर्णयन्ति ।)
( पुनस्तत्रैव ।)

निर्मज्जच्चक्षुरन्तर्भ्रमदतिकपिशक्रूरतारा नरास्थि-
ग्रन्थिं दन्तान्तरालग्रथितमविरतं जिह्वया घट्टयन्ती ।
ध्वान्तेऽपि व्यात्तवक्त्रज्वलदनलशिखाजर्जरे व्यक्तकर्मा
निर्मान्ती गृध्ररौद्रीं दिवमुपरि परिक्रीडते ताडकेयम् ॥ ५४ ॥

अपि च ।

त्रेताग्निकुण्डपूरं च वर्षन्तो रुधिरच्छटाः ।
हिंस्राः सुबाहुमारीचमिश्रा नः परिवृण्वते ॥ ५५ ॥

विश्वामित्रः— ( साकूतम् । ) कथं ताडका ? वत्स रामभद्र !

विधानमानुश्रविकं गृहेषु नः प्रतिस्फुरन्ती किमियं प्रतीक्ष्यते ।
सुबाहुमुख्यैः सममाततायिभिर्गृहाण चापं निगृहाण ताडकाम् ॥ ५६ ॥

रामः— ( सघृणातिरेकम् ।) भगवन् ! स्त्रियमिमाम् ?

( पुनर्नेपथ्ये । )

"अब्रह्मण्यम् । भोस्तात विश्वामित्र ! परिभूयामहे । प्रहीयता-मधिज्यधन्वा दाशरथिः" ।

रामः— ( विहस्य । नेपथ्यावलोकितकेन । ) बालर्षे शुनःशेफ ! मुहूर्तं धीरोभव ।

अलं क्लिशित्वा गुरुमल्पकोऽयं विधिस्त्वदाज्ञैव गरीयसी नः।
न कौशिकस्य त्वयि धर्मपुत्रे पुत्रे मधुच्छन्दसि वा विशेषः॥ ५७॥

विश्वामित्रः—वत्स! कृतमुत्तरोत्तरेण। नन्वयं नेदीयानाश्रमोपघातः।

लक्ष्मणः—( सव्यथमिव। स्वगतम्। )

मीमांसते किमार्योऽयं कौशिकेऽप्यनुशासति।
वाचमेषामृषीणां हि शास्त्रमेवानुवर्तते॥ ५८॥

रामः—( स्वगतम्। )

गुर्वादेशादेव निर्मीयमाणो नाधर्माय स्त्रीवधोऽपि स्थितोऽयम्।
अद्य स्थित्वा श्वो गमिष्यद्भिरल्पैर्लज्जास्माभिर्मीलिताक्षैर्जितैव॥ ५९॥

किं तु—

दीर्घं प्रजाभिरतिकौतुकिनीभिराभि-
रस्मिन्नकीर्तिपटहे मम ताड्यमाने।
ज्योतिर्मयेन वपुषा जगदन्तसाक्षी
लज्जिष्यते कुलगुरुर्भगवान्वसिष्ठः॥ ६०॥

( नेपथ्ये। )

"अलमिष्वा महान्मूर्खाः! बह्नुधारेयमस्ति नः।
अदवीयानयं पन्थाः स्वर्लोकमुपतिष्ठते"॥ ६१॥

रामः—( श्रुत्वा सरोषं ससंभ्रमं चोत्थाय सविनयमञ्जलिं बद्ध्वा। ) भगवन्! जगत्त्रयगुरो गाधिनन्दन!

दशरथगृहे संभूतं मामवाप्य धनुर्धरं
दिनकरकुलास्कन्दी कोऽयं कलङ्कनवाङ्कुरः।

इति न वनितामेतां हन्तुं मनो विचिकित्सते
यदधिकरणं धर्मस्थीयं तवैव वचांसि नः ॥ ६२ ॥

( प्रणिपत्य नेपथ्याभिमुखम् । ) भोस्तपोधनाः ! मा भैष्ट ।

रजनिचरचमूरमूरपास्यन्नयमहमागत एव रामचन्द्रः ।
कुशिकसुतकुशाग्रतोयबिन्दोरिदमनुकल्पमवेत कार्मुकं मे ॥ ६३ ॥

(इति धनुरारोपयन्निष्क्रान्तः । )

लक्ष्मणः—( साशङ्कमात्मगतम् । ) दिष्ट्या क्षात्रेण धर्मेण कौमारमप्य-शून्यमार्यस्यासीत् । ( नेपथ्याभिमुखमवलोक्य हर्षं नाटयन्प्रकाशम् । ) भगवन् कौशिक ? पश्य पुरस्तादार्ये धृतधनुषि—

वायव्यास्त्रव्यतिकरनिरालम्बनस्ताडकेयः
प्राप्तो जीवन्मरणमसुभिर्विप्रमुक्तः सुबाहुः ।
कृत्तोन्मुक्ता भुवि च करुणाश्चर्यबीभत्सहास-
त्रासक्रोधोत्तरलमृषिभिर्दृश्यते ताडकेयम् ॥ ६४ ॥

विश्वामित्रः—( विलोक्य । ) वत्स ! लक्ष्मण विस्मयेन प्रमोदेन च परवन्तो वयं न वाचामधीश्महे । वक्तव्यमेव वा किमस्ति । न खल्वि-यमद्यतनी वः प्रतिष्ठा ।

दिक्कूलंकषकीर्तिधौतवियतो निर्व्याजवीर्योज्ज्वला-
स्ते यूयं रघवः प्रसिद्धमहसो यैः सोऽपि देवाधिपः ।
बिभ्राणैरसुराधिराजविजयक्रीडानिदानं धनुः
पौलोमीकुचपत्रभङ्गरचनाचातुर्यमध्यापितः ॥ ६५ ॥

लक्ष्मणः—भगवन् ! पश्य—

अद्य नैशाचरीं सेनामेनामुन्मूलयन्नयम् ।
आधानं वीरधर्मस्य निर्माय त्वामुपस्थितः ॥ ६६ ॥

( प्रविश्य । )

रामः—( सवैलक्ष्यस्मितम् । )

एषा वसिष्ठः कुशिकात्मजोऽयं त्रयस्त एते गुरवो रघूणाम् ।
महामुनेरस्य गिरा कृतोऽपि स्त्रैणो वधो मां न सुखाकरोति ॥ ६७ ॥

( आश्रममवलोक्य । )

प्रत्यासन्नतुषारदीधितिकरक्लिश्यत्तमोवल्लरी-
वल्याभिर्मखधूमवल्लिभिरमी संमीलितव्यञ्जनाः ।
श्वः संचीवरयिष्यमाणबटुकव्याधूतशुष्यत्त्वचो-
निद्राणातिथयस्तपोधनगृहाः कुर्वन्ति नः कौतुकम् ॥ ६८ ॥

( पुरतोऽवलोक्य । )

* चन्द्रवर्णनम् *

स्फुरति पुरतो माद्यन्माद्यच्चकोरविलोचन-
प्रकरकिरणश्रेणीदत्तस्वहस्तघनं महः ।
हृदय ! लघु मा भूः प्रेयोदर्शनप्रतिभूरयं
कुवलयदृशामिन्दुर्नेत्रे सुधाभिरनक्ति नः ॥ ६९ ॥

अपि च ।

उन्मीलन्ति मृणालकोमलरुचो राजीवसंवर्तिका-
संवर्तव्रतवृत्तयः कतिपये पीयूषभानोः कराः ।
अप्युत्सैर्धवलीभवत्सु गिरिषु क्षुब्धोऽयमुन्मज्जता
विश्वेनेव तमोमयो निधिरपासह्याय फेनायते ॥ ७० ॥

( सनिर्वेदम् । )

इन्दुर्यद्युदयाद्रिमूर्ध्नि न भवत्यद्यापि तन्मा स्म भू-
दासीरेऽपि तमःसमुच्चयममूरुन्मूलयन्ति त्विषः ।
अप्यक्ष्णोर्मुदमुद्गिरन्ति कुमुदैरामोदयन्ते दिशः
संप्रत्यूर्ध्वमसौ तु लाञ्छनमभिव्यङ्क्तुं प्रकाशिष्यते ॥ ७१ ॥

( सहर्षम् । )

काश्मीरेण दिहानमम्बरतलं वामभ्रुवामानन-
द्वैराज्यं विदधानमिन्दुदृषदां भिन्दानमम्भःशिराः ।
प्रत्युद्यत्पुरुहूतपत्तनवधूदत्तार्घदर्भाङ्कुर-
क्षीबोत्सङ्गकुरङ्गमैन्दवमिदं बिम्बं समुज्जृम्भते ॥ ७२ ॥

एताश्च—

पौलोमीकुचकुम्भकुङ्कुमरजःस्वाजन्यजन्मोद्धताः
शीतांशोर्द्युतयः पुरंदरपुरीसीम्नामुपस्कुर्वते ।
एताभिर्लिहतीभिरन्धतमसान्युद्भ्रमथ्नतीभिर्दिशः
क्षोणीमास्तृणतीभिरन्तरतमं व्योमेदमोजायते ॥ ७३ ॥

अपि च ।

नैवायं भगवानुदञ्चति शशी गव्यूतिमात्रीमपि
धामद्याऽपि तमस्तु कैरवकुलश्रीचाटुकाराः कराः ।
मथ्नन्ति स्थलसीम्नि शैलगहनोत्सङ्गेषु संरुन्धते
जीवग्राहमिव क्वचित्क्वचिदपि च्छायासु गृह्णन्ति च ॥ ७४ ॥

( ज्योत्स्नातिशयं विभाव्य । )

किं नु ध्वान्तपयोधिरेष कतकक्षोदैरिवेन्दोः करै-
रत्यच्छोऽयमधश्च पङ्कमखिलं छायापदेशादभूत् ।
किं वा तत्करकर्तरीभिरभितो निस्तक्षणादुज्ज्वलं
व्योमैवेदमितस्ततश्च पतिताश्छायाछलेन त्वचः ॥ ७५ ॥

( परिक्रम्य पार्श्वतोऽवलोक्य च । )

दलविततिभृतां तले तरूणामिह तिलतण्डुलितं मृगाङ्करोचिः ।
मदचपलचकोरचञ्चुकोटीकवलनतुच्छमिवान्तरान्तराभूत् ॥ ७६ ॥

( विभाव्य च । )

त्रिभुवनतमोलुण्टाकीनामहो मिहिरत्विषा-
मभिविधिरसौ कोकश्रेणीमनस्यवशिष्यते ।

क्षुधमपि तमः कोपादन्तः प्रविश्य विनिघ्नतः
शशधरकरानच्छिन्नाग्रांश्चरन्ति चकोरकाः ॥ ७७ ॥

अपि चेदानीं—

तथा पौरस्त्यायां दिशि कुमुदकेदारकलिका-
कपाटघ्नोमिन्दुः किरणलहरीमुल्लसयति ।
समन्तादुन्मीलद्बहलजलबिन्दुस्तबकिनो-
यथा पुञ्जायन्ते प्रतिगुडकमेणाङ्कमणयः ॥ ७८ ॥

( परिक्रामन्नूर्ध्वमवलोक्य । )

तरुणतमालकोमलमलीमसमेतदयं
कलयति चन्द्रमाः किल कलङ्कमिति ब्रुवते ।
तदनृतमेव निर्दयविधुंतुददन्तपद-
व्रणविवरोपदर्शितमिदं हि विभाति नभः ॥ ७९ ॥

किं च ।

रुचिभिरभितष्टङ्कोत्कीर्णैरिव त्रसरेणुभि-
र्यदुडुभिरपि च्छेदैः स्थूलैरिव भ्रियते नभः ।
प्रकृतिमलिनो भास्वद्बिम्बोन्मृजाकृतकर्मण-
स्तदयमपि हि त्वष्टुः कुन्दे भविष्यति चन्द्रमाः ॥ ८० ॥

लक्ष्मणः—( सर्वतोऽवलोक्य । )

भूयस्तराणि यदमूनि तमस्विनीषु
जौत्स्नीषु च प्रविरलानि ततः प्रतीमः ।
संध्याऽनलेन भृशमम्बरमूषिकाया-
मावर्तितैरुडुभिरेव भृतोऽयमिन्दुः ॥ ८१ ॥

( विहस्य च ।) हन्त, यथाधर्ममेतत् ।

यत्पीयूषमयूखमालिनि तमःस्तोमावलीढायुषां
नेत्राणामपमृत्युहारिणि पुरः सूर्योढ एवातिथौ ।
अम्भोजानि पराञ्चि तन्निजमर्घं दत्त्वैव तेभ्यस्ततो-
गौराङ्गीवदनोपमासुकृतमादत्ते पतिर्यज्वनाम् ॥ ८२ ॥

विश्वामित्रः—( सर्वतोऽवलोक्य । सस्मितम् ।) अहह नामधेयमात्रमाधुर्यात् अपरमार्थदृश्वानो विप्रलभ्यन्ते । तथा हि—

स्मेरा दिशः, कुमुदमुद्भिदुरं, पिबन्ति
ज्योत्स्नाकरम्भमुदरंभरयश्चकोराः ।
आः कीदृगत्रिमुनिलोचनदूषिकायां
पीयूषदीधितिरिति प्रथितोऽनुरागः ॥ ८३ ॥

( रामं च दृष्ट्वा । सहर्षस्मितम् । ) कथमयं कुमाराऽङ्कविजयप्रत्यागतोऽपि ताडकानिग्रहेण ह्रीणीयमानः सहसा नोपतिष्ठते वत्सः । (लक्ष्मणं प्रति ।) वत्स सौमित्रे ! अस्माकमनेन वृत्तान्तेन प्रदोषलक्ष्मीरियमनूद्यते । पश्य-

निशाचराणां तमसां निहन्ता पुरोऽयमुद्गच्छति रामचन्द्रः ।
अथोल्लसद्भिर्नयनैर्मुनीनामयं कुमुद्वानजनि प्रदेशः ॥ ८४ ॥

रामः— ( विभाव्य ।)

मदयति यदुत्पन्नो दुग्धाम्बुधेरयमम्बुधीन् ,
नयति नयनादत्रेर्जातो मुदं नयनानि च ।
तदखिलसुरश्रेणीसाधारणप्रणया शची-
सहचरवरूथाली सोमः समञ्जसमीहते ॥ ८५ ॥

(सलज्जमुपसृत्य ।) भगवन् ! अभिवादये ।

विश्वामित्रः— ( सस्नेहबहुमानमालिङ्ग्य । ) वत्स रघुनन्दन ! इत्थमेव-

प्रकृष्टकर्त्रभिप्रायक्रियाफलवतो विधीन् ।
प्रयुञ्जानास्त्वया वीर ! परिपाल्यामहे वयम् ॥ ८६ ॥

रामः— ( स्वगतम् । ) शिरसा गृहीतमाचार्यवचनम् ।

विश्वामित्रः— ( समरधूलिधूसरं रामस्य कपोलमुन्मार्जयन् । ) वत्सत्वम-मुना नक्तंचरव्यतिकरेण प्रियसुहृदा सीरध्वजेन वितन्यमाने वैताने कर्मणि कम्पितमिव मे हृदयम् ।

रामः— ( सगौरवम् । ) भगवन् ! क एष सीरध्वजो नाम यमद्य ते त्रिभुवनदुर्लभोऽयं प्रियसुहृच्छब्दप्रयोगः कमपि महिमानमारोपयति ?

विश्वामित्रः— वत्स ! शृणोषि विदेहेषु मिथिलां नाम नगरीम् ?

रामः—यत्र पवित्रमाश्चर्यद्वयं जनाः कथयन्ति । सकलदुराकर्ष-मैन्दुशेखरं धनुः, लाङ्गलमुखोल्लिखितविश्वम्भराप्रसूतिरगर्भसंभवा मानुषी च ।

विश्वामित्रः— ( विहस्य । ) अथ किम् ?

रामः— ( सकौतुकम् । ) ततः किं तस्याम् ?

विश्वामित्रः—

असौ सीरध्वजो राजा यो देवाद् द्युमणेरपि ।
अध्यैष्ट याज्ञवल्क्यस्य मुखेन ब्रह्मसंहिताम् ॥ ८७ ॥

तस्य संन्यस्तशस्त्रस्य पुराणराजर्षेर्जनकवंशजन्मनो दीक्षाविलोप-शङ्का पर्याकुलयति माम् । तदेतमायुष्मन्तौ, विधिशेषमस्मदीयं समाप्य सहैव मिथिलामुपतिष्ठामहे ।

रामः— ( सहर्षमपवार्य । ) वत्स लक्ष्मण ! ममापि तस्मिन्नतरुणरोहिणी-रमणचूडामणिपाणिप्रणयिनि शरासने चिरस्य कौतुकमस्ति ।

लक्ष्मणः—(सहपरिहासम् । ) आर्यायामयोनिजन्मनि राजकन्यका-यामपि ?

रामः—( सरोषस्मितम् । ) कथमन्यदेव किमपि प्रहसनं सूत्रयति भवान् । ( मुनिं प्रति । ) भगवन् इक्ष्वाकुवंशगुरो ! यदभिरुचितं भवते ।

( इति परिक्रम्य निष्क्रान्ताः सर्वे । )

इति कौमारविक्रमो नाम द्वितीयोऽङ्कः ।

( श्रीमुरारेरनर्घराघवात् )

---

## श्री भर्तृहरि निर्वेदम्

राजाभर्तृहरिः कदाचित्स्वमहिष्या भानुमत्याः प्रेमस्थेमानं परीक्षितुकामो मृगरमणाऽपदेशाद्वनप्रदेश मुपगतो दूतमुखेन श्वापदसंपादितस्वप्राणान्तोदन्तं नितान्त मलीक मपि तस्या अन्तिकं प्राहिणोत्। अनभ्रवज्रपातमिव कुलाऽचलक्षोभकरं, अनिमित्तोत्पातमिव सर्वाऽऽशोपघातकं, म्लेच्छव्रातमिव श्रुतिदाहकं, स्वपतिघातं समाकर्ण्य पतिव्रताततिपताकायमाना सा मानिनी क्षणादेव क्षीणचेतना क्षितितलं जगाम। अथ मृगयाप्रतिनिवृत्तो नरपतिस्तस्यास्तादृशंलीलासंवरणं निशम्य तन्मरणकारणमात्मान मेवावधार्य मोहमुपेयिवान्। प्राप्तचेतनश्च नितरां चुक्रोश। तामङ्के निवेश्य अनुमर्त्तु मेव मतिमकरोत्। अमात्यादिभिः पुनः पुनः प्रबोध्यमानोऽपि न स्थिरचित्तोऽभूत्। एतद्विज्ञाय प्रसिद्धसिद्धः श्रीगुरुगोरक्षनाथ स्तन्महामोहनिशानाशाय योगिरूपेण तत्राऽऽजगाम। नृपतिर्महिष्या यान् यान् गुणान् स्मारं स्मारं यथा यथा विललाप योगी अपि भग्नां स्थालीं पुरतो निधाय तस्यामपि तान् तानेव गुणानाऽऽरोप्य तैस्तै रेवशब्दै रोदितु मारेभे। तच्छोकापनोदाय समागतो राजा वैराग्यचर्चामाचरत्। तत्राऽन्तरे एव योगी "परोपदेशेपाण्डित्यं" इत्याद्युक्त्वा तं लज्जितमकरोत्। राजा च प्राप्तवैराग्यो भवत्।

### तृतीयोऽङ्कः।

(ततः प्रविशति सोन्मादो राजा।)

राजा—अयि कान्ते काशिराजनन्दिनि!

त्वया त्यक्ताः प्राणाः प्रणयिमरणाऽऽकर्णनवशात्
यशः स्त्रीणां त्रीनप्युपरि बत लोकानिदमभूत्।

अतो देहः शोच्यो बत बत न मोच्यो यदि मया
कथं वार्यो यूनां गुरुरपयशोदुन्दुभिरयम् ॥ १ ॥

इयं च मे साधीयसी प्रत्याशा यदेनामङ्के निधाय मृतस्य, एतदनुध्यानवशाज्जन्मान्तरेऽप्यनया सनाथत्वं भविष्यतीति ।

( नेपथ्ये । )

हा डिण्डिके कुत्राऽसि गता । हा दैव ! अति प्रतिकूलतया मां परिहृत्य नाशिता मे डिण्डिका । ( इति विकलं रोदिति ।)

( परिजना अनुसरन्ति ।)

राजा—( विलोक्य ।) कथमयं योगी भग्नां स्थालीमनुशोचमानो निपतति । तद्भवतु एनमाश्वासयामि ।

( ततः प्रविशति यथानिर्दिष्टो योगी ।)

योगी—हा डिण्डिके ! ( इत्यादि पूर्वोक्तं पठित्वा रोदिति ।)

राजा—योगिन् ! समाश्वसिहि ।

योगी—( ( निःश्वस्य ।) हन्त, कीदृश आश्वासो यस्य मम दूरदेशपरिभ्रमणसहचरी अनेकगुणप्रणयिनी डिण्डिका भग्ना ?

राजा—( सकरुणम् आत्मगतम् । )

अल्पस्यापि व्यपायेन प्रेयसो विषयस्य कः ।
न शोचते पुनः किं स्यान्मादृशामीदृशापदि ॥ २ ॥

तथापि बोधयामि योगिनम् । ( प्रकाशम् ) योगिन् ! किमनया नष्टया एवं परितप्यसे ?

योगी—( सास्रम् । ) के यूयं निष्ठुरा एवं भणथ ? अथवा अनभिज्ञागुणनाम् ।

राजा— के नामाऽस्या गुणाः ?

योगी— हन्त ! कियन्तो गण्यन्ताम् ? तथाऽपि केऽपि गण्यन्ते ।

करीषानुच्चेतुं दहनमुपनेतुं मुहुरपः
समाहर्तुं भिक्षामटितुमथ तां रक्षितुमपि ।
पिधातुं पक्तुं चाऽशितुमथ च पातुं क्वचिदथो-
पधातुं नः पात्री चिरमहह चिन्तामणिरभूत् ॥ ३ ॥

राजा— एवमेतत् ।

प्रियस्य वस्तुनो नाम गुणान्को गणयिष्यति ।
स्नेहेनोपहृताः सर्व तत्रैव सुखहेतवः ॥ ४ ॥

तथाप्यशक्यप्रतीकारे विनष्टे वस्तुन्यलमनुतापेन ।

योगी— मया एव एतस्या दृढत्वं परीक्षितुं प्रवृत्तेन पातिता भग्ना, इति महान् संतापः ।

राजा— (सखेदम् ।) स्वयं नाशिते प्रिये वस्तुन्यविश्रान्तिः संतापस्य ।

कथमपि यत्र क्लिष्टे वस्तुनि दृष्टे प्रमोहमेति मनः ।
स्वयमेव नाशितेऽस्मिन्क्षणमपि कः प्राणिति हताशः ॥ ५ ॥

( इत्यश्रूणि विमुच्य सधैर्यम् । ) तथापि योगिन् !

भवितव्यता भगवती वस्तु प्रियमप्रियं वापि ।
घटयितुमथ विघटयितुं प्रभवति पुरुषस्य को दोषः ॥ ६ ॥

( योगी अनाकर्णयंस्तत्कर्परोत्करं हृदये निधाय रोदिति । )

राजा— योगिन् ! अलं रुदितेन । दीयते मया इतोऽप्यधिकतरा मृण्मयी रजतयी सुवर्णमयी वा स्थाली ।

योगी— ( कर्णौ पिधाय ) शान्तं पापम् । अलं सुवर्णादिमय्या डिम्बिकया । यतो मृत्तिकामय्या एव डिम्बिकया एतादृशोऽनर्थः परिणतावुत्पाद्यते किं पुनः सुवर्णादिमय्या ? अपि च—

मदग्राहोद्भ्रान्तिर्भयमकरकोटिव्यतिकरः
स्फुरद्द्वेषाऽऽवर्तस्तरलिमतरङ्गोपचयभूः ।
तनीयानप्यर्थो मम यदि दुरर्थोदधिरभूत्
प्रभूतायामापद्यहमिह निमग्नो निपतितः ॥ ७ ॥

अपि च ! इतोऽप्यधिकतरेत्यलीकमावेदयसि । इयं खलु तथा सुस्पर्शा सुरमणीयाकृतिः सुगभीरविस्तारा सुदृढप्रकृतिः तादृशी तदधिकतरा वा कुतोऽन्या संभाव्यते ?

राजा— ( सनिर्वेदम् । )

अधिकाधिकानि गुणतो नितरामितराणि सन्तु सुलभानि शतम् ।
प्रणयेन यस्तु मनसस्तु परं परितापकारि किमपि क्रियते ॥ ८ ॥

योगिन् !

अधिकतरं प्रियमेतन्ममेति बुद्धि र्न वस्तुसौन्दर्यात् ।
नूनमनपेक्षितगुणो मोहघनः स्नेह एवेह ॥ ९ ॥

योगी— भो मुग्ध ! न खलु केवलं स्नेह एव । शरीरसंवर्धनमप्येतया स्थितया भवेत् ।

राजा— अथ कियन्तं कालमिदमिदानीमनष्टमपि पात्रं स्थितं स्यात् ?

चेत्कल्पकोटिमथ कल्पशतानि कल्पं
कल्पार्धमप्यथ यदि स्थिरताऽस्य भूयात् ।
युक्ताभवेदिह मनागपि शोचना ते
द्वित्रैर्दिनैर्यदि विनङ्क्ष्यति कोऽत्र शोकः ॥ १० ॥

अलं च शरीरसंवर्धकविनाशानुतापेन । यतः—

देहस्यास्य हितानि यद्धिरहितान्येतानि वस्तूनि वः
संतापाय भवन्ति हन्त सकलः सोऽयं मनोविभ्रमः ।
देहेनैव यदेवमादिविपदां देहेन दुर्जन्मना
छिन्नाण्येव फलानि पाणिपयसोराश्लेष एव भ्रमः ॥ ११ ॥

योगी—तथाऽपि विप्रियं परिहृत्य किमिति प्रियं अनुवर्त्तते लोकः ?

राजा— विभ्रमात् । पश्य—

यद्वन्माद्यति सौष्ठवेन विषयस्याऽऽपाततः प्रेयस-
स्तद्वत्ताम्यति तत्र तत्र विपदा तस्यैव पर्यन्ततः ।
व्यत्यासेन च वस्तु विप्रियमपि स्वे संपदापद्द्वये
तापायाथ मुदे तदेव कुरुते मोहः प्रियं चाप्रियम् ॥ १२ ॥

योगी— सुष्ठु एतज्ज्ञायते तथाप्यप्रतीकारं ताम्यति मम हृदयम् ।

राजा—यदि सन्नपि नालमपि वस्तुविचारस्तदा कः प्रतीकारः ।

योगी—अत्र मरणमेव प्रतीकारः । यतः एतां हृदये कृत्वा म्रियमाणो जन्मान्तरे प्येतया सनाथो भविष्यामि ।

राजा—( विहस्य । ) सोऽयं संसारमूलं महामोहः । यस्य नाम ईदृशानि दुःखमयानि दुर्विलसितानि ।

योगी—( सोच्चैर्हासम् । )

परोपदेशे पाण्डित्यमिदं मूढस्य गीयते ।
तमः समाश्रितस्येव दीपेनाऽन्यप्रकाशनम् ॥ १३ ॥

( राजा सवैलक्ष्यमधोमुखश्चिन्तयति । )

योगी—राजन् ! किं विचिन्त्यते ?

राजा—भगवन्! किमपरं मद्वाक्यैरेव मामुपदिश्य ममापनीतोऽयं शोकः श्रीपादैः।

योगी—एवमेतत्। भगवतीं विन्ध्यवासिनीमवलोक्य परावृत्तेन मया त्वामेवंभूतमवगत्य सत्त्वसुलभेन करुणभावेन तवायमुन्मीलितः प्रबोधः।

राजा—तदवधारयामि श्रीगोरक्षनाथपादैर्भवद्भिर्भवितव्यम्!

योगी—एवमेतत्।

राजा—भगवन्! साधु उद्धृतोऽहमस्मादन्धकूपात्। (इति पादयोः पतति)
(गोरक्षनाथ उत्थापयति।)

राजा—(अञ्जलिं बद्ध्वा।) यदतः परं तदुपदिशतु गुरुर्येन भूयोऽपि नैतादृशमनर्थमासादये।

गोरक्षनाथः—साधु, उत्कटदुःखाऽभिषङ्गलाङ्गलावकृष्टा वस्तु-विवेकरसावसेकवती विज्ञानबीजं वप्तुमस्ति योग्या ते चित्तभूमिः। श्रूयताम्—

संकल्पात्सकलापि संसृतिरभूदेषा विशेषान्ध्यभू-
रस्याश्चेद्विनिवृत्तिमिच्छसि तदेतन्मूलमुन्मूलय।
नाऽवच्छिन्नमनेहसा न च दिशा यद्ब्रह्म सच्चिन्मयं
तत्त्वं तत्त्वमिदं विचिन्तय परानन्दं पदं प्राप्स्यसि॥ १४॥

राजा—भगवन्! त्यक्ताः खल्वाशापरपर्याया मया संकल्पाः। साधु साधु।

यदामोदो मोहं दिशि दिशि दिशत्याशु मनसः
फलानामास्वादो जनयति यदीयो निपतनम्।

इहैवासां सद्यो वनविषलतानामिव मया
निरासादाशानां जितमहह मोक्षस्तु परतः ॥ १५ ॥

तत्त्वचिन्तनं चैतत्कथं स्यात् ?

गोरक्षः—

विषयेभ्यः समाहृत्य मनः शून्ये निवेशय ।
स्वयमानन्दमात्मानं स्वप्रकाशमुपैष्यसि ॥ १६ ॥

राजा—तद्भवतु । संनिहिते एव विजनोपवनैकदेशे गत्वा चिन्तयाम्येतत् ।

( इति निष्क्रान्ताः सर्वे । )

इति तृतीयो ऽङ्कः ।

# मुद्राराक्षसम्

## षष्ठोऽङ्कः

### राक्षसविषादः

( ततः प्रविशति रज्जुहस्तः पुरुषः । )

पुरुषः—

षड्गुणसंयोगदृढा उपायपरिपाटीघटितपाशमुखी ।
चाणक्यनीतिरज्जू रिपुसंयमनोद्यता जयति ॥ १ ॥

( परिक्रम्यावलोक्य च । ) एष स प्रदेश आर्यचाणक्यस्य पुरत उदुम्बरकेन कथितो यत्र मया आर्यचाणक्याऽऽज्ञप्त्या अमात्यराक्षसः प्रेक्षितव्यः । कथमेष खल्वमात्यराक्षसः कृतशीर्षावगुण्ठन इत एवागच्छति । तद्यावदेभिरुद्यानपादपैरन्तरितशरीरः प्रेक्षे कुत्रासनपरिग्रहं करोतीति ।

( ततः प्रविशति यथानिर्दिष्टः सशस्त्रो राक्षसः । )

राक्षसः—( सास्रम् । ) कष्टं भोः, कष्टम् ।

उच्छिन्नाश्रयकातरेव कुलटा गोत्रान्तरे श्रीर्गता
तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः ।
आप्तैरप्यनवाप्तपौरुषफलैः कार्यस्य धूरुज्झिता
किं कुर्वन्त्वथवोत्तमाङ्गरहितैर्नाङ्गैश्चिरं स्थीयते ॥ २ ॥

अपि च ।

पतिं त्यक्त्वा देवं भुवनपतिमुच्चैरभिजनं
गता छिद्रेण श्रीर्वृषलमविनीतेव वृषली ।
स्थिरीभूता चास्मिन्किमिह करवाम स्थिरमपि
प्रयत्नं नो येषां विफलयति दैवं द्विषदिव ॥ ३ ॥

मया हि—

देवे गते दिवमतद्विधमृत्युयोग्ये
शैलेश्वरं तमधिकृत्य कृतः प्रयत्नः ।
तस्मिन्हते तनयमस्य, तथाप्यसिद्धि-
र्दैवं हि नन्दकुलशत्रुरसौ न विप्रः ॥ ४ ॥

अहो विवेकशून्यता म्लेच्छस्य । कुतः—

यो नष्टानपि बीजनाशमधुना शुश्रूषते स्वामिन-
स्तेषां वैरिभिरक्षतः कथमसौ संधास्यते राक्षसः ।
एतावद्धि विवेकशून्यमनसा म्लेच्छेन नालोचितं
दैवेनोपहतस्य बुद्धिरथवा सर्वा विपर्यस्यति ॥ ५ ॥

तदिदानीमपि तावदरातिहस्तगतो विनश्येन्न तु राक्षसश्चन्द्रगुप्तेन सह संदधीत । अथवा मम काममसत्यसंध इति परमयशो न तु शत्रुवञ्चनपराभूत इति । ( समन्तादवलोक्य सास्रम् । ) एतास्ता देवपाद-चंक्रमणपरिचयपवित्रीकृततलाः कुसुमपुरोपकण्ठभूमयः । इह हि—

शार्ङ्गाकर्षावमुक्तप्रशिथिलकषिकाप्रग्रहेणात्र देशे
देवेनाकारि चित्रं प्रजवितुरगं बाणमोक्षश्चलेषु ।
अस्यामुद्यानराजौ स्थितमिह कथितं, राजभिस्तैर्विनेत्थं
संप्रत्यालोक्यमानाः कुसुमपुरभुवो भूयसा दुःखयन्ति ॥ ६ ॥

तत्क नु गच्छामि मन्दभाग्यः । ( विलोक्य ) भवतु । दृष्टमेतज्जीर्णो-द्यानम् । अत्र प्रविश्य कुतश्चिच्चन्दनदासप्रवृत्तिमुपलप्स्ये । अलक्षित-निपाताः पुरुषाणां समविषमदशापरिणतयो भवन्ति । कुतः ।

पौरैरङ्गुलिभिर्नवेन्दुवदहं निर्दिश्यमानः शनै-
र्यो राजेव पुरा पुरान्निरगमं राज्ञां सहस्रैर्वृतः ।

भूयः संप्रति सोऽहमेव नगरे तत्रैव वन्ध्यश्रमो-
जीर्णोद्यानकमेष तस्कर इव त्रासाद्विशामि द्रुतम् ॥ ७ ॥

अथवा येषां प्रसादादिदमासीत्त एव न सन्ति। ( नाट्येन प्रविश्या-वलोक्य च। ) अहो जीर्णोद्यानस्यारमणीयता। अत्र हि—

विपर्यस्तं सौधं कुलमिव महाऽऽरम्भरचनं
सरः शुष्कं साधोर्हृदयमिव नाशेन सुहृदाम्।
फलैर्हीना वृक्षा विगुणनृपयोगादिव नया-
स्तृणैश्छन्ना भूमिर्मतिरिव कुनीतैरविदुषः ॥ ८ ॥

अपि च।

क्षताङ्गानां तीक्ष्णैः परशुभिरुदग्रैः क्षितिरुहां
रुजा कूजन्तीनामविरतकपोतोपरुदितैः।
स्वनिर्मोकच्छेदैः परिचितपरिक्लेशकृपया
श्वसन्तः शाखानां व्रणमिव निबध्नन्ति फणिनः ॥ ९ ॥

एते च तपस्विनः—

अन्तःशरीरपरिशोषमुदग्रयन्तः
कीटक्षतिस्रुतिभिरस्रमिवोद्वमन्तः।
छायावियोगमलिना व्यसने निमग्ना
वृक्षाः श्मशानमुपगन्तुमिव प्रवृत्ताः १० ॥

यावदस्मिन्विषमदशापरिणामसुलभे भिन्नशिलातले मुहूर्त्तमुप-विशामि। ( उपविश्याकर्ण्य च ) अये, किमिदमस्मिन्काले पटुपटहशङ्ख-ध्वनिमिश्रोनान्दीनादः ? य एषः—

प्रवृद्धङ्छ्रोतॄणां श्रुतिपथमसारं गुरुतया
बहुत्वात्प्रासादैः सपदि परिपीतोज्झित इव।
असौ नान्दीनादः पटुपटहशङ्खध्वनियुतो—
दिशां द्रष्टुं दैर्घ्यं प्रसरति सकौतूहल इव ॥ ११ ॥

( विचिन्त्य । ) आः, ज्ञातम् । एष हि मलयकेतुसंयमनसंजातो राजकुलस्य ( इत्यर्द्धोक्ते साసूयम् । ) मौर्यकुलस्याधिकपरितोषं पिशुनयति । ( सबाष्पम् । ) कष्टं भोः, कष्टम् ।

श्रावितोऽस्मि श्रियं शत्रोरुपनीय च दर्शितः ।
अनुभावयितुं मन्ये यत्नः संप्रति मां विधेः ॥ १२ ॥

पुरुषः—आसीनोऽयम् । यावदार्यचाणक्यादेशं संपादयामि ।

( राक्षसमपश्यन्निव तस्याग्रतो रज्जुपाशेन कण्ठमुद्बध्नाति । )

राक्षसः—( विलोक्य । ) अये, कथमात्मानमुद्बध्नात्ययमहमिव दुःखितस्तपस्वी ? भवतु । पृच्छाम्येनम् । भद्र ! किमिदमनुष्ठीयते ?

पुरुषः—( सबाष्पम् । )आर्य ! यत्प्रियवयस्यविनाशदुःखितोऽस्मादृशो मन्दभाग्योऽनुतिष्ठति ।

राक्षसः—( आत्मगतम् । ) प्रथममेव मया ज्ञातं—नूनमहमिवार्त्तस्तपस्वीति । ( प्रकाशम् । ) हे व्यसनसब्रह्मचारिन् ! यदि न गुह्यं नातिभारिकं वा ततः श्रोतुमिच्छामि ।

पुरुषः—आर्य ! न रहस्यं नातिगुरुकम् । किं तु न शक्नोमि प्रियवयस्यविनाशदुःखितहृदयः एतावन्मात्रमपि मरणस्य कालहरणं कर्तुम् ।

राक्षसः—(निःश्वस्यात्मगतम् ।) कष्टम्, एते सुहृद्व्यसनेषु परमुदासीनाः प्रत्यादिश्यामहे वयमनेन । ( प्रकाशम् । ) भद्र ! यदि न रहस्यं नातिगुरु तच्छ्रोतुमिच्छामि ।

पुरुषः— अहो निर्बन्ध आर्यस्य । का गतिः ? निवेदयामि । अस्ति तावदत्र नगरे मणिकारश्रेष्ठी विष्णुदासो नाम ।

राक्षसः— ( आत्मगतम् ) अस्ति विष्णुदासश्चन्दनदासस्य सुहृत् । ( प्रकाशम् ) किं तस्य ?

पुरुषः— स मम प्रियवयस्यः ।

राक्षसः— ( सहर्षमात्मगतम् ) अये प्रियवयस्य इत्याह । अत्यन्तसंनिकृष्टः संबन्धः । हन्त ! ज्ञास्यामि चन्दनदासस्य वृत्तान्तम् । ( प्रकाशम् ) भद्र ! किं तस्य ?

पुरुषः— स संप्रति दत्ताभरणादिविभवो ज्वलनं प्रवेष्टुकामो नगरान्निष्क्रान्तः । अहमपि यावत्तस्याश्रोतव्यं न शृणोमि तावदात्मानमुद्बध्य व्यापादयितुमिदं जीर्णोद्यानमागतः ।

राक्षसः— भद्र ! अग्निप्रवेशे सुहृदस्ते को हेतुः ?

किमौषधपथातिगैरुपहतो महाव्याधिभिः ?

पुरुषः— नहि नहि ।

राक्षसः—

किमग्निविषकल्पया नरपतेर्निरस्तः क्रुधा ?

पुरुषः— आर्य ! शान्तं पापं शान्तं पापम् । चन्द्रगुप्तस्य जनपदे न नृशंसा प्रतिपत्तिः ।

राक्षसः—

अलभ्यमनुरक्तवान्कथय किंनु नारीजनं ?

पुरुषः— ( कर्णौ पिधाय ) शान्तं पापम् । अभूमिः खल्वेषोऽविनयस्य ।

राक्षसः—

किमस्य भवतो यथा सुहृद एव नाशोऽवशः ? ॥ १३ ॥

पुरुषः— आर्य ! अथ किम् ।

राक्षसः—( सावेगमात्मगतम् ) चन्दनदासस्य प्रियसुहृदिति, तद्विनाशो-हुतभुजि प्रवेशहेतुरिति, यत्सत्यं चलितमेवास्ते युक्तस्नेहपक्षपातात् हृदयम् । ( प्रकाशम् ) तद्विनाशं च, प्रियसुहृद्वत्सलतया मर्तव्ये व्यवसितस्य सुचरितं च विस्तरेण श्रोतुमिच्छामि ।

पुरुषः— अतोऽपरं न शक्नोमि मन्दभाग्यो मरणस्य विघ्नमुत्पादयितुम् ।

राक्षसः— भद्र ! श्रवणीयां कथां कथय ।

पुरुषः— का गतिः ? किं कर्तव्यम् ? एष खलु निवेदयामि । शृणोत्वार्यः ।

राक्षसः— भद्र ! अवहितोऽस्मि ।

पुरुषः— अस्ति इह नगरे मणिकारश्रेष्ठी चन्दनदासो नाम ।

राक्षसः— ( सविषादमात्मगतम् ) एतत्तदपावृतमस्मच्छोकदीक्षाद्वारं दैवेन। हृदय ! स्थिरीभव । किमपि ते कष्टतरमाकर्णनीयमस्ति । ( प्रकाशम् ) भद्र ! श्रूयते मित्रवत्सलः साधुः । किं तस्य ?

पुरुषः—स एतस्य विष्णुदासस्य प्रियवयस्यो भवति ।

राक्षसः—( स्वगतम् । ) सोऽयमभ्यर्णः शोकवज्रपातो हृदयस्य ।

पुरुषः—ततो विष्णुदासेन वयस्यस्नेहसदृशमद्य विज्ञप्तश्चन्द्रगुप्तः ।

राक्षसः—कथय किमिति ?

पुरुषः—देव ! मम गेहे कुटुम्बभरणपर्याप्ताऽर्थवत्तास्ति । तदेतेन विनिमयेन मुच्यतां प्रियवयस्य श्चन्दनदास इति ।

राक्षसः—( स्वगतम् । ) साधु भो विष्णुदास ! साधु । अहो, दर्शितो-मित्रस्नेहः । कुतः—

पितॄन्पुत्राः पुत्रान्परवदभिहिंसन्ति पितरो-
यदर्थं सौहार्दं सुहृदि च विमुञ्चन्तिसुहृदः ।
प्रियं मोक्तुं तं यो व्यसनमिव सद्यो व्यवसितः
कृतार्थोऽयं सोऽर्थस्तव सति वणिक्त्वेऽपि वणिजः ॥ १४ ॥

( प्रकाशम् । ) भद्र ! ततस्तथाभिहितेन किं प्रतिपन्नं मौर्येण ?

पुरुषः—आर्य ! तत एवं भणितेन चन्द्रगुप्तेन प्रतिभणितः श्रेष्ठी विष्णुदासः "न मयाऽर्थस्य कारणेन चन्दनदासः संयमितः, किंतु प्रच्छादितोऽनेनामात्यराक्षसस्य गृहजन इति बहुशो ज्ञातम् । तेनापि बहुशो याचितेनापि न समर्पितः" ।

राक्षसः—भद्र ! न खलु व्यापादितश्चन्दनदासः ?

पुरुषः—अद्य तावद्व्यापाद्यते । स खलु सांप्रतं पुनः पुनरमात्यराक्षसस्य गृहजनं याच्यते । न खलु स मित्रवत्सलतया समर्पयति । तदेतेन कारणेन न करोमि मरणस्य कालहरणम् ।

राक्षसः—( सहर्षमात्मगतम् । ) साधु वयस्य चन्दनदास ! साधु ।

शिवेरिव समुद्भूतं शरणागतरक्षया ।
निचीयते त्वया साधो ! यशोऽपि सुहृदा विना ॥ १५ ॥

( प्रकाशम् । ) भद्र ! गच्छ गच्छेदानीम् । शीघ्रं विष्णुदासं ज्वलनप्रवेशान्निवारय । अहमपि चन्दनदासं मरणान्मोचयामि ।

पुरुषः—अथ पुनः केनोपायेन त्वं चन्दनदासं मरणान्मोचयसि ?

राक्षसः—( खड्गमाकृष्य । ) नन्वनेन व्यवसायसुहृदा निस्त्रिंशेन । पश्य ।

निस्त्रिंशोऽयं सजलजलदव्योमसंकाशमूर्ति—
र्युद्धश्रद्धापुलकित इव प्राप्तसख्यः करेण ।

सत्त्वोत्कर्षात्समरनिकषे दृष्टसारः परैर्मे
मित्रस्नेहाद्विवशमधुना साहसे मां नियुङ्क्ते ॥ १६ ॥

पुरुषः—आर्य ! एवं श्रेष्ठिचन्दनदासजीवितप्रदानपिशुनितं विषमदशाविपाकनिपतितं साधु न शक्नोमि त्वां निर्णीय प्रतिपत्तुं । किं सुगृहीतनामधेया अमात्यराक्षसपादा यूयं दिष्ट्या दृष्टाः ?

राक्षसः—उत्तिष्ठोत्तिष्ठ । अलमिदानीं कालहरणेन । निवेद्यतां विष्णुदासाय–एष राक्षसश्चन्दनदासं मरणान्मोचयति। ( इति 'निस्त्रिंशोऽयम्' ६। १८ इति पठन्नाकृष्य खड्गं परिक्रामति । )

पुरुषः—तत्कुरु मे प्रसादं संदेहनिर्णयेन ।

राक्षसः—सोऽहमनुभूतभर्तृविनाशः सुहृद्विपत्तिहेतुरनार्यो दुर्गृहीतनामधेयो यथार्थो राक्षसः ।

पुरुषः— (सहर्षं पुनः पादयोः पतित्वा । ) आश्चर्यम् । दिष्ट्या दृष्टोऽसि। प्रसीदन्तु अमात्यपादाः। अस्ति तावदत्र प्रथमं चन्द्रगुप्तहतकेनार्यशकटदासो वध्यस्थानमाज्ञप्तः । स च वध्यस्थानात्केनाप्यपहृत्य देशान्तरं नीतः। ततश्चन्द्रगुप्तहतकेन–'कस्मादेष प्रमादः कृतः' इति,आर्यशकटदासे समुज्ज्वलितः कोपवह्निर्घातकजननिधनेन निर्वापितः । ततः प्रभृति घातका यं कमपि गृहीतशस्त्रमपूर्वं पुरुषं पृष्ठतो वाग्रतो वा प्रेक्षन्ते तदात्मनो जीवितं परिरक्षन्तोऽप्रमत्ता वध्यस्थाने वध्यं व्यापादयन्ति । एवं च गृहीतशस्त्रैरमात्यपादैर्गच्छद्भिः श्रेष्ठिचन्दनदासस्य वधस्त्वरायितो भवति ।

राक्षसः— ( स्वगतम् । ) अहो दुर्बोधश्चाणक्यबटोर्नीतिमार्गः ।
कुतः—

यदि च शकटो नीतः शत्रोर्मतेन ममान्तिकं
किमिति निहतः क्रोधावेशाद्वधाधिकृतो जनः ।
अथ न, कृतकं तादृक्कष्टं कथं नु विभावये-
दिति मम मतिस्तर्कारूढा न पश्यति निश्चयम् ॥ १७ ॥

( विचिन्त्य । )

नायं निस्त्रिंशकालः प्रथममिह कृते घातकानां विघाते
नीतिः कालान्तरेण प्रकटयति फलं किं तया कार्यमत्र ।
औदासीन्यं न युक्तं प्रियसुहृदि गते मत्कृतामेव घोरां
व्यापत्तिं, ज्ञातमस्य स्वतनुमहमिमां निष्क्रयं कल्पयामि ॥ १८ ॥

( इति निष्क्रान्ताः सर्वे । )

( षष्ठोऽङ्कः । )

# प्रबोधचन्द्रोदयम्

## द्वितीयोऽङ्कः ।

( ततः प्रविशति दम्भः )

दम्भः— आदिष्टोऽस्मि महाराजमहामोहेन । यथा—"वत्स दम्भ ! प्रतिज्ञातं सामात्येन विवेकेन प्रबोधोदयाय । प्रेषिताश्च तेषु तेषु तीर्थेषु शमदमादयः । स चायमस्माकमुपस्थितः कुलक्षयो भवद्भिः अवहितैः प्रतिकर्तव्यः । तत्र पृथिव्यां परमं मुक्तिक्षेत्रं वाराणसीनाम नगरी तद्भवांस्तत्र गत्वा चतुर्णा मप्याश्रमाणां निःश्रेयसविघ्नार्थं प्रयततामिति" । तदिदानीं वशीकृतभूयिष्ठा मया वाराणसी । संपादितश्च स्वामिनो यथानिर्दिष्ट आदेशः । ( विलोक्य ) कोऽप्ययं पान्थो- भागीरथीमुत्तीर्य सांप्रतमित एवाभिवर्तते । तथा च यथैषः—

ज्वलन्निवाभिमानेन ग्रसन्निव जगत्त्रयीम् ।
भर्त्सयन्निव वाग्जालैः प्रज्ञयोपहसन्निव ॥ १ ॥

तथा तर्कयामि । नूनमयं दक्षिणराढाप्रदेशादागतो भविष्यति । तत् एतस्मादाऽऽर्यस्याहंकारस्य वृत्तान्तंज्ञास्यामि । ( इति परिक्रामति )

( ततः प्रविशत्यहंकारो यथानिर्दिष्टः )

अहंकारः— अहो ! मूर्खबहुलं जगत् । तथाहि—

नैवाश्रावि गुरोर्मतं न विदितं कौमारिलं दर्शनं
तत्त्वंज्ञातमहो न शारिकगिरां वाचस्पतेः का कथा ।
सूक्तं नापि महोदधेरधिगतं माहाव्रती नेक्षिता
सूक्ष्मा वस्तुविचारणा, नृपशुभिः स्वस्थैः कथं स्थीयते ॥ २ ॥

( विलोक्य ) एते तावदर्थावधारणविधुराः स्वाध्यायाध्ययनमात्र- निरता वेदविप्लावका एव । ( पुनरन्यतो गत्वा ) एते च भिक्षामात्र-

गृहीतयतिव्रता मुण्डितमुण्डाः पण्डितंमन्या वेदान्तशास्त्रं व्याकुलयन्ति। ( विहस्य )

प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः।
वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते ॥ ३ ॥

तदेतद्वाङ्मात्रश्रवणमपि गुरुतरदुरितोदयाय। ( पुनरन्यतो गत्वा ) एते च शैवपाशुपतादयो दुरभ्यस्ताक्षपादमताः पशवः पाषण्डाः। अमीषां संभाषणादपि नरा नरकं यान्ति। तदेते दर्शनपथाद्दूरतः परिहरणीयाः। ( पुनरन्यतो गत्वा ) एते च—

गङ्गातीरतरङ्गशीतलशिलाविन्यस्तभास्वद्बृसी-
संविष्टाः कुशमुष्टिमण्डितमहादण्डाः करण्डोज्ज्वलाः।
पर्यायग्रथिताक्षसूत्रवलयप्रत्येकबीजग्रह-
व्यग्राऽग्राऽङ्गुलयो हरन्ति धनिनां वित्तान्यहो दाम्भिकाः ॥ ४ ॥

( पुनरन्यतो गत्वा ) एते त्रिदण्डव्यपदेशजीविनो द्वैताद्वैतमार्गपरिभ्रष्टा एव। ( अन्यतो गत्वा विलोक्य ) अये! कस्यैतद्द्वारोपान्तनिखातितप्रांशुवंशकाण्डताण्डवितधौतसितसूक्ष्माम्बरसहस्रम्, इतस्ततोविन्यस्तकृष्णाजिनदृषदुपलसमिच्चषालोलूखलमुसलम्, अनवरतहुताज्यगन्धिधूमश्यामलितगगनमण्डलम्, अमरसरितो नातिदूरे विभात्याश्रममण्डलम्। नूनमिदं कस्यापि गृहमेधिनो गृहं भविष्यति। भवतु। युक्तमस्माकमिति। पवित्रमेतद्द्वित्रिदिवसनिवासस्थानम्। ( प्रवेशं नाटयति )। ( विलोक्य च ) अये!

मृद्बिन्दुलाञ्छितललाटभुजोदरोरः-
कण्ठोष्ठपृष्ठचुबुकोरुकपोलजानुः।
चूडाग्रकर्णकटिपाणिविराजमान-
दर्भाङ्कुरः स्फुरति मूर्त इवैष दम्भः ॥ ५ ॥

भवतु, उपसर्पाम्येनम् । ( उपसृत्य । ) कल्याणं भवतु भवताम् । ( दम्भो-हुंकारेण निवारयति । )

( प्रविशति बटुः । )

बटुः—( ससंभ्रमम् । ) ब्रह्मन् ! दूरत एव स्थीयताम् । यतः पादौ प्रक्षाल्य एतदाश्रमपदं प्रवेष्टव्यम् ।

अहंकारः—( सक्रोधम् । ) आः पाप ! तुरुष्कदेशं प्राप्ताः स्मः । यत्र श्रोत्रियानतिथीनासनपाद्यादिभिरपि गृहिणो नोपतिष्ठन्ति ।

दम्भः—( हस्तसंज्ञया समाश्वासयति । )

बटुः—एवमाराध्यपादा आज्ञापयन्ति "दूरदेशादागतस्यार्यस्य कुलशीलादिकं न सम्यगस्माकं विदितम् ।

अहंकारः—आः कथमस्माकमपि कुलशीलादिकमिदानीं परीक्षितव्यम् । श्रूयताम्—

गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढापुरी
भूरिश्रेष्ठकनाम धाम परमं तत्रोत्तमो नः पिता ।
तत्पुत्राश्च महाकुला न विदिताः कस्यात्र तेषामपि
प्रज्ञाशीलविवेकधैर्यविनयाऽऽचारैरहं चोत्तमः ॥ ६ ॥

( दम्भो बटुं पश्यति । )

बटुः—( ताम्रघटीं गृहीत्वा ) भगवन् ! पादशौचं विधीयताम् ।

अहंकारः—( स्वगतम् ) भवतु । कोऽत्र विरोधः । एवं क्रियते ।
( तथा कृत्वोपसर्पति । )

दम्भः— ( दन्तान्संपीड्य बटुं पश्यति । )

बटुः— दूरे तावत्स्थीयताम् । वाताहताःप्रस्वेदकणिकाः प्रसरन्ति ।

अहंकारः— अहो ! अपूर्वमिदं ब्राह्मण्यम् ।

बटुः— ब्रह्मन् ! एवमेतत् । तथाहि—

अस्पृष्टचरणा ह्यस्य चूडामणिमरीचिभिः ।
नीराजयन्ति भूपालाः पादपीठान्तभूतलम् ॥ ७ ॥

अहंकारः— ( स्वगतम् ) अये, दम्भग्राह्योऽयं देशः ! ( प्रकाशम् ) भवतु अस्मिन्नासने उपविशामि । ( तथा कर्तुमिच्छति । )

बटुः— मैवम् । नाराध्यपादानामन्यैरासनमाक्रम्यते ।

अहंकारः— आः पाप ! अस्माभिरपि दक्षिणराढाप्रदेशप्रसिद्धविशुद्धिभिर्नाक्रमणीयमिदमासनम् ? शृणु रे मूर्ख !

नास्माकं जननी तथोज्ज्वलकुला सच्छ्रोत्रियाणां पुन-
र्व्यूढा काचन कन्यका खलु मया तेनास्मि ताताधिकः ।
अस्मच्छ्यालकभागिनेयदुहिता मिथ्याभिशप्ता यत-
स्तत्संपर्कवशान्मया स्वगृहिणी प्रेयस्यपि प्रोज्झिता ॥ ८ ॥

दम्भः— ब्रह्मन् ! यद्यप्येवं तथाप्यस्माकमविदितवृत्तान्तो भवान् । तथाहि—

सदनमुपगतोऽहं पूर्वमम्भोजयोनेः
सपदि मुनिभिरुच्चैरासनेषूज्झितेषु ।
सशपथमनुनीय ब्रह्मणा गोमयाम्भः-
परीमृजितनिजोरावाशु संवेशितोऽस्मि ॥ ९ ॥

अहंकारः— ( स्वगतम् ) अहो, दाम्भिकस्य ब्राह्मणस्यात्युक्तिः । ( विचिन्त्य ) अथवा दम्भस्यैव भवत्वेवं तावत् । ( प्रकाशम् ) आः, किमेवं गर्वायसे ? ( सक्रोधम् )

अरे क इव वासवः कथय कोऽत्र पद्मोद्भवो—
यद् प्रभवभूमयो जगति का मुनीनामपि ।
अवेहि तपसो बलं मम पुरन्दराणां शतं
शतं च परमेष्ठिनां पततु वा मुनीनां शतम् ॥ १० ॥

दम्भः—(विलोक्य । सानन्दम्) अये ! आर्यः पितामहोऽस्माकमहंकारः । आर्य ! दम्भो लोभात्मजोऽहं भां अभिवादये ।

अहंकारः— वत्स ! आयुष्मान्भव । बालः खल्वसि मया द्वापरान्ते दृष्टः । संप्रति चिरकालविप्रकर्षाद्वार्धक्यग्रस्ततया च न सम्यक्प्रत्यभिजानामि । अथ त्वत्कुमारस्यानृतस्य कुशलम् ? ।

दम्भः— अथ किम् । सोऽप्यत्रैव महामोहस्याऽऽज्ञया वर्तते । नहि तेन विना मुहूर्तमप्यहं प्रभवामि ।

अहंकारः— अथ तव मातापितरौ तृष्णालोभावपि कुशलिनौ ? ।

दम्भः— तावपि राज्ञो महामोहस्याज्ञयाऽत्रैव वर्तेते । तयोर्विना क्षणमपि न तिष्ठामि । आर्यमिश्रैः पुनः केन प्रयोजनेनात्र प्रसादः कृतः ?

अहंकारः—वत्स ! मया महामोहस्य विवेकसकाशादत्याहितं श्रुतम् । तेन तद्वृत्तान्तं प्रत्येतुमागतोऽस्मि ।

दम्भः— स्वागतमेवार्यस्य । यतो महाराजस्यापीन्द्रलोकादत्रागमनं श्रूयते । अस्ति च किंवदन्ती यद्देवेन वाराणसी राजधानी वस्तुं निरूपितेति ।

अहंकारः— किं पुनः वाराणस्यां सर्वात्मना मोहस्यावस्थानकारणमिति ?

दम्भः— आर्य ! ननु विवेकोपरोध एव । तथाहि—

विद्याप्रबोधोदयजन्मभूमिर्वाराणसी ब्रह्मपुरी निरत्यया ।
असौ कुलोच्छेदविधिं चिकीर्षुर्निवस्तुमत्रेच्छति नित्यमेवम् ॥ ११ ॥

अहंकारः— ( सभयम् ) यद्यप्येवमशक्यप्रतीकार एवायमर्थः ।
यतः—

परममविदुषां पदं नराणां पुरविजयी करुणाविधेयचेताः ।
कथयति भगवानिहान्तकाले भवभयकातरतारकं प्रबोधम् ॥ १२ ॥

दम्भः— सत्यमेतत्तथापि नैतत्कामक्रोधाभिभूतानां संभाव्यते ।
तथा ह्युदाहरन्ति तैर्थिकाः—

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ १३ ॥

( नेपथ्ये ) भो भोः पौराः! एष खलु संप्राप्तो देवो महामोहः ।
तेन—

निष्यन्दैश्चन्दनानां स्फटिकमणिशिलावेदिकाः संस्क्रियन्तां—
मुच्यन्तां यन्त्रमार्गाः प्रचरतु परितो वारिधारा गृहेषु ।
उच्छ्रीयन्तां समन्तात्स्फुरदुरुमणयः श्रेणयस्तोरणानां
धूयन्तां सौधमूर्धस्वमरपतिधनुर्धामचित्राः पताकाः ॥ १४ ॥

दम्भः—आर्य !प्रत्यासन्नोऽयं महाराजः । तत्प्रत्युद्गमनेन संभाव्यतामार्येण ।

अहंकारः—एवं भवतु । ( निष्क्रान्तौ )

( प्रवेशकः । )

( ततः प्रविशति महामोहो विभवतश्च परिवारः । )

महामोहः—अहो, ( विहस्य ) अहो, निरङ्कुशा जडधियः ।

आत्मास्ति देहव्यतिरिक्तमूर्तिर्भोक्ता स लोकान्तरितः फलानाम् ।
आशेयमाकाशतरोः प्रसूनात्प्रथीयसी स्वादुफलप्रसूतौ ॥ १५ ॥

इदं च स्वकल्पनाविनिर्मितपदार्थाऽवष्टम्भेन जगदेवं दुर्विदग्धै र्वंच्यते । तथाहि—

यन्नास्त्येव तदस्ति वस्त्विति मृषा जल्पद्भिरेवास्तिकै-
र्वाचालैर्बहुभिस्तु सत्यवचसो निन्द्याः कृता नास्तिकाः ।
हंहो पश्यत तत्त्वतो यदि पुनश्छिन्नादितो वर्ष्मणो—
दृष्टः किं परिणामरूपितचितेर्जीवः पृथक्केनचि ॥ १६ ॥

अपि च न केवलं जगदात्मैव तावदमीभिर्वञ्च्यते । तथाहि—

तुल्यत्वे वपुषां मुखाद्यवयवैर्वर्णक्रमः कीदृशो—
योषेयं वसु चापरस्य तदमुं भेदं न विद्मो वयम् ।
हिंसायामथवा यथेष्टगमने स्त्रीणां परस्वग्रहे
कार्याकार्यविचारणा हि यदमी निःपौरुषाः कुर्वते ॥ १७ ॥

( विचिन्त्य सश्लाघम् । ) सर्वथा लोकायतमेव शास्त्रं, यत्र प्रत्यक्षमेव प्रमाणं, पृथिव्यप्तेजोवायवस्तत्त्वानि, अर्थकामौ पुरुषार्थौ, भूतान्येव चेतयन्ते । नास्ति परलोकः । मृत्युरेवापवर्गः । तदेतदस्मदभिप्रायानुबन्धिना वाचस्पतिना प्रणीय चार्वाकाय समर्पितम् । तेन च शिष्योपशिष्यद्वारेणास्मिँल्लोके बहुलीकृतं तन्त्रम् ।

( ततः प्रविशति चार्वाकः शिष्यश्च ।)

चार्वाकः—वत्स! जानासि दण्डनीतिरेव विद्या । अत्रैव वार्तान्तर्भवति धूर्तप्रलापस्त्रयी । स्वर्गोत्पादकत्वेन विशेषाभावात् ।

पश्य—

स्वर्गः कर्तृक्रियाद्रव्यविनाशे यदि यज्वनाम् ।
ततो दावाग्निदग्धानां फलं स्याद्भूरि भूरुहाम् ॥ १८ ॥

अपि च ।

निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते ॥
स्वपिता यजमानेन किं न तस्मान्निहन्यते ॥ १९ ॥

अपि च ।

मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम् ।
निर्वाणस्य प्रदीपस्य स्नेहः संवर्धयेच्छिखाम् ॥ २० ॥

शिष्यः—आचार्य! यद्येष एव परमार्थः पुरुषस्य यत्खाद्यते पीयते । तर्हि किमित्येतै स्तीर्थैः संसारसौख्यं परिहृत्याऽऽत्मा घोरघोरतरैः पराकसान्तरनपृष्ठकाऽऽत्माशनप्रभृतिभिर्दुःखैः क्षिप्यते ?

चार्वाकः—धूर्तप्रणीतागमप्रतारितानामाशामोदकैरियं तृप्तिर्मूर्खाणाम् ।

शिष्यः—आचार्य ! एवं खलु तैर्थिका आलपन्ति । यद्दुःखमिश्रितं संसारसुखं परिहरणीयमिति ।

चार्वाकः—( विहस्य ) आः, दुर्बुद्धिविलसितमिदं नरपशूनाम् ।

त्याज्यं सुखं विषयसंगमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।

व्रीह्यञ्जिहासति सितोत्तमतण्डुलाढ्याम्
को नाम भोस्तुषकणोपहितान्हितार्थी ॥ २१ ॥

महामोहः— अये, चिरेण खलु प्रमाणवन्ति वचनानि कर्णसुखमुत्पा-जनयन्ति । ( विलोक्य सानन्दम् ) हन्त, प्रिय सुहृन्मे चार्वाकः !

चार्वाकः— ( विलोक्य ) एष महाराजो महामोहः । ( उपसृत्य ) जयतु जयतु महाराजः । एष चार्वाकः प्रणमति ।

महामोहः— चार्वाक ! स्वागतं ते । इहोपविश्यताम् ।

चार्वाकः— ( उपविश्य ) एष कलेः साष्टाङ्गं प्रणामः ।

महामोहः— अये, तत्र कलेः भद्रमव्याहतम् ? ।

चार्वाकः— देवप्रसादात्सर्वत्र भद्रम् । निर्वर्तितकृत्यशेषश्च देवपाद-मूलं द्रष्टुमाजिगमिषति । यतः—

आज्ञामवाप्य महतीं, द्विषतां निपाता-
न्निर्वर्त्य तां, सपदि लब्धसुखप्रसादः ।
उच्चैः प्रमोदमनुमोदितदर्शनः सन्
धन्यो नमस्यति पदाम्बुरुहं प्रभूणाम् ॥ २२ ॥

महामोहः— अथ तस्मिन्कलौ कियत्संवृत्तम् ?

चार्वाकः— देव !

व्यतीतवेदार्थपथः प्रथीयसीं यथेष्टचेष्टां गमितो महाजनः ।
तदत्र हेतुर्न कलिर्न चाप्यहं प्रभोः प्रभावो हि तनोति पौरुषम् ॥२३॥

तत्रोत्तराः पथिकाः पाश्चात्याश्च त्रयीमेव त्याजिताः । शमदमा-

दीनां कैव कथा ? अन्यत्रापि प्रायशो जीविकामात्रफलैव त्रयी । यथाऽऽहाऽऽचार्यः—

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
प्रज्ञापौरुषहीनानां जीविकेति बृहस्पतिः ॥ २४ ॥

तेन कुरुक्षेत्रादिषु तावद्देवेन स्वप्नेऽपि विद्याप्रबोधोदयो नाऽऽशङ्कनीयः ।

महामोहः— साधु संपादितम् । महत्खलु तत्तीर्थं व्यर्थीकृतम् ।

चार्वाकः— देव ! अन्यच्च विज्ञाप्यमस्ति ।

महामोहः— किं तत् ?

चार्वाकः— अस्ति विष्णुभक्तिर्नाम महाप्रभावा योगिनी । सा कलिना यद्यपि विरलप्रचारा कृता तथापि तदनुगृहीतान्वयमालोकयितुमपि न प्रभवामः । तदत्र देवेनावधातव्यमिति ।

महामोहः— (सभयमात्मगतम्) आः, प्रसिद्धमहाप्रभावा सा योगिनी स्वभावाद्विद्वेषिणी चास्माकं दुरुच्छेद्या सा । भवतु ।( स्वगतम् ) कार्यमत्याहितं भविष्यति । ( प्रकाशम् ) तत्र भद्र ? अलमनया शङ्कया । कामक्रोधादिषु प्रतिपक्षेषु कुत्रेयमुदेष्यति ?

चार्वाकः—तथापि लघीयस्यपि रिपौ नाऽनवहितेन जिगीषुणा भवितव्यम् । यतः—

विपाकदारुणो राज्ञां रिपुरल्पोऽप्यरुंतुदः ।
उद्वेजयति सूक्ष्मोऽपि चरणं कण्टकाङ्कुरः ॥ २५ ॥

महामोहः—( नेपथ्याभिमुखमवलोक्य ) कः कोऽत्र भोः ?

( प्रविश्य दौवारिकः । )

दौवारिकः—जयतु जयतु । आज्ञापयतु देवः ।

महामोहः—भो असत्सङ्ग ! आदिश्यन्तां कामक्रोधलोभमदमात्सर्या-ऽऽदयो यथा योगिनी विष्णुभक्तिर्भवद्भिरेवाऽवहितैर्विहन्तव्येति ।

दौवारिकः—यदाज्ञापयति देवः ।

( इति निष्क्रान्तः ।)

( ततः प्रविशति पत्रहस्तः पुरुषः । )

पुरुषः—

अहमुत्कलदेशादागतोऽस्मि । अस्ति तत्र सागरतीरसंनिवेशो पुरुषो-त्तमशब्दितं देवतायतनम् । ततो मदमानाभ्यां भट्टारकाभ्यां महा-राजसकाशं प्रेषितोऽस्मि । एषा वाराणसी । इदं राजकुलम् । याव-त्प्रविशामि । एष भट्टारकश्चार्वाकेण सार्धं किमपि मन्त्रयंस्तिष्ठति । तदुपसर्पाम्येनम् । ( उपसृत्य ) जयतु जयतु भट्टारकः । इदं पत्रं तावन्निरूप्यमाणं प्रेक्षतां भट्टारकः । ( इति पत्र मर्पयति । )

महामोहः—( पत्रंगृहीत्वा ) कुतो भवान् ?

पुरुषः—अहं पुरुषोत्तमादागतोऽस्मि ।

महामोहः—( स्वगतम् ) कार्यमत्याहितं भविष्यति । ( प्रकाशम् । ) चार्वाक ! गच्छ । कर्तव्येऽत्रवहितेन भवता भवितव्यम् ।

चार्वाकः—यदाज्ञापयति देवः ।

( इति निष्क्रान्तः । )

**महामोहः**—( पत्रं वाचयति । )

'स्वस्ति श्रीवाराणस्यां महाराजाधिराजपरमेश्वरमहामोहपादान्पुरुषो-त्तमायतनात् मदमानौ साष्टाङ्गपातं प्रणम्य विज्ञापयतः— यथा, भद्रमस्याहतम् । अन्यच्च देवी शान्तिर्मात्रा श्रद्धया सह विवेकस्य दौत्यमापन्ना विवेकसंगमाय देवीमुपनिषदमहर्निशं प्रबोधयति । अपि च कामसहचरोऽपि धर्मो वैराग्यादिभिरुपजप्त इव लक्ष्यते । यतः कामाद्विभिद्य कुतश्चिन्निगूढः प्रचरति । तदेतज्ज्ञात्वा तत्र देवः प्रमाणमिति ।

**महामोहः**—( सक्रोधम् ) आः किमेवमतिमुग्धौ शान्तेरपि बिभ्यतः ? कामादिषु प्रतिपक्षेषु कुतोऽस्याः संभवः ?

( पुरुषं प्रति वदति । )

आलम ! गच्छ । कामं सत्वरमुपेत्यादेशमस्माकं प्रतिपादय—"तथा दुराशयो धर्म इत्यस्माभिरवगतम् । तदस्मिन्मुहूर्तमपि न विश्वसि-तव्यम् । दृढं बध्वा धारयितव्य इति" ।

**पुरुषः**—यद्देव आज्ञापयति ।

( इति निष्क्रान्तः । )

**महामोहः**—( स्वगतं विचिन्त्य ) शान्तेः कोऽभ्युपायः ? अथवा अलम् उपायान्तरेण । क्रोधलोभावेव तावदत्र पर्याप्तौ । ( प्रकाशम् ) कः कोऽत्र भोः ।

( प्रविश्य दौवारिकः । )

**दौवारिकः**—आज्ञापयतु देवः ।

**महामोहः**—तावदाहूयतां क्रोधो लोभश्च ।

**पुरुषः**—यदाज्ञापयति । देवः ।

( इति निष्क्रान्तः । )

( ततः प्रविशति क्रोधो लोभश्च । )

क्रोधः—श्रुतं मया, यथा शान्तिश्रद्धाविष्णुभक्तयो महाराजेन प्रतिपक्षमाचरन्तीति। अहो, मयि जीवति कथमासामात्मनि निरपेक्षितं चेष्टितम् ? तथाहि—

अन्धीकरोमि भुवनं बधिरीकरोमि
धीरं सचेतनमचेतनतां नयामि।
कृत्यं न पश्यति, न येन हितं शृणोति,
धीमानधीतमपि न प्रतिसंदधाति ॥ २६ ॥

लोभः—अये, मदुपगृहीता मनोरथसरित्परम्परामेव तावन्न तरिष्यन्ति किं पुनः शान्त्यादींश्चिन्तयिष्यन्ति ? पश्य पश्य सखे !

सन्त्येते मम दन्तिनो मदजलप्रम्लानगण्डस्थला
वातव्यायतपातिनश्च तुरगा भूयोऽपि लप्स्येऽपरान्।
एतल्लब्धमिदं लभे पुनरिदं लब्धाधिकं ध्यायतां
चिन्ताजर्जरचेतसां बत नृणां का नाम शान्तेः कथा ॥ २७ ॥

क्रोधः—सखे ! विदितस्त्वया मत्प्रभावः ?

त्वाष्ट्रं वृत्रमघातयत्सुरपति, श्चन्द्रार्धचूडोऽच्छिनत्
देवो ब्रह्मशिरो, वसिष्ठतनयानाघातयत्कौशिकः।

अपि च—

विद्यावन्त्यपि कीर्तिमन्त्यपि सदाचारावदातान्यपि
प्रौढैःपौरुषभूषणान्यपि कुलान्युद्धर्तुमीशोऽस्म्यहम् ॥ २८ ॥

लोभः— तृष्णे ! इतस्तावत्।

( प्रविश्य तृष्णा )

तृष्णा— किमाज्ञापयत्यार्यपुत्रः ?

लोभः— प्रिये ! श्रूयताम्—

क्षेत्रग्रामवनाद्रिपत्तनपुरद्वीपक्षमामण्डल-
प्रत्याशाघनसूत्रबद्धमनसां लब्धाधिकं ध्यायताम् ।
तृष्णे ! देवि यदिप्रसीदसि तनोष्यङ्गानि तुङ्गानि चेत्
तद्भोः प्राणभृतां कुतः शमकथा ब्रह्माण्डलक्षैरपि ॥ २६ ॥

तृष्णा— आर्यपुत्र ! स्वयमेव तावदहमस्मिन्नर्थे नित्यमभियुक्ता। सांप्रतमार्यपुत्रस्याऽऽज्ञया ब्रह्माण्डकोट्योऽपि न मे उदरं पूरयिष्यन्ति।

क्रोधः— हिंसे ! इत आगम्यताम् ।

( प्रविश्य हिंसा )

हिंसा— एषास्मि ! आज्ञापयत्वार्यपुत्रः ।

क्रोधः— प्रिये ! तावत्त्वया सहधर्मचारिण्या मातृपितृवधोऽपि ममेषत्कर एव । तथाहि—

केयं माता पिशाची, क इव हि जनको, भ्रातरः केऽत्र कीटा,
वध्योऽयं बन्धुवर्गः, कुटिलविटसुहृच्चेष्टिता ज्ञातयोऽमी ।

( हस्तौ निष्पीड्य )

आगर्भं यावदेषां कुलमिदमखिलं नैव निःशेषयामि
स्फूर्जन्तः क्रोधवह्नेर्न दधति विरतिं तावदङ्गे स्फुलिङ्गाः ॥ ३० ॥

( विलोक्य ) एष स्वामी । तदुपसर्पामः । ( सर्वे उपसृत्य ) जयतु जयतु देवः ।

महामोहः— श्रद्धायास्तनया शान्तिरस्मद्वेषिणी । सा भवद्भिरवहितैर्निग्राह्येति ।

सर्वे— यदादिशति देवः ।

( इति निष्क्रान्ताः । )

**महामोहः**— श्रद्धायास्तनया इत्युपक्षेपेणोपायान्तरमपि हृदयमारूढम् । तथाहि । शान्तेर्माता श्रद्धा । सा च परतन्त्रा । तत् केनाप्युपायेनोपनिषत्सकाशात्तावच्छ्रद्धापकर्षणं कर्तव्यम् । ततो-मातृवियोगदुःखादतिमृदुलतया शान्तिरुपरता भविष्यति । श्रद्धां व्याक्रष्टुं मिथ्यादृष्टिरेव विलासिनी परं प्रगल्भेति तदस्मिन्विषये सैव नियुज्यताम् । ( पार्श्वतो विलोक्य ) विभ्रमावति ! सत्वरमाहूयतां मिथ्यादृष्टिर्विलासिनी ।

**विभ्रमावती**—यद्देव आज्ञापयति ।

( निष्क्रम्य मिथ्यादृष्टया सह प्रविशति । )

**मिथ्यादृष्टिः**— सखि ! चिरदृष्टस्य महाराजस्य कथं मुखं प्रेक्षिष्ये ? न खलु मां महाराज उपालम्भिष्यते ?

**विभ्रमावती**— सखि ! त्वन्मुखदर्शनेनात्मानमेव महाराजो न वेत्स्यति । कुत उपालम्भिष्यते ?

**मिथ्यादृष्टिः**— सखि ! किं मामलीकसौभाग्यां संभाव्य विडम्बयसि ?

**विभ्रमावती**— सखि ! सांप्रतमेव प्रेक्षिष्येऽलीकत्वं सौभाग्यस्य । एष महाराजः । उपसर्पतु प्रियसखी ।

**मिथ्यादृष्टिः**— ( उपसृत्य ) जयतु जयतु महाराजः । आज्ञापयतु महाराजः किंनिमित्तं भट्टारकेण स्मृतास्मि ?

**महामोहः**— प्रिये !

स्मर्यते सा हि वामोरु ! या भवेद्धृदयाद्बहिः ।
मच्चित्तभित्तौ भवती शालभञ्जीव राजते ॥ ३१ ॥

मिथ्यादृष्टिः— महान्प्रसादः।

महामोहः— यथैव प्रकाशितैरङ्गैः सर्वत्र विचरसि तथैव प्रवर्तितव्यम्। अन्यच्च दास्याः पुत्री श्रद्धा विवेकेन सहोपनिषदं संयोजयितुं कुट्टिनीभावं प्रतिपन्ना। अतः—

प्रतिकूलामकुलजां पापां पापानुवर्तिनीम्।
केशेष्वाकृष्य तां रण्डां पापण्डेषु निवेशय॥ ३२॥

मिथ्यादृष्टिः—एतावन्मात्रेऽपि विषये अलं भर्तुरभिनिवेशेन। वचनमात्रेणैवभर्तुर्दासी श्रद्धा सर्वामाज्ञां करिष्यति। सा खलु मया मिथ्या धर्मो, मिथ्या मोक्षो, मिथ्या वेदमार्गो, मिथ्या सुखविघ्नकराणि, मिथ्या शास्त्रप्रलपितानि, मिथ्या स्वर्गफलमिति भण्यमाना वेदमार्गमेव परिहरिष्यति, किं पुनरुपनिषदम्? अपि च, विषयानन्दविमुक्ते मोक्षे दोषान्दर्शयन्त्या उपनिषदोऽपि विरक्ता करिष्यतेऽचिरं मया श्रद्धा।

महामोहः— यद्येवं, सुष्ठु, मे प्रियं संपादितं प्रियया। तद्भवतु। स्वागारमेव प्रविशामः।

( इति निष्क्रान्ताः सर्वे। )

इतिश्रीकृष्णमिश्रविरचिते प्रबोधचन्द्रोदयनाम्नि नाटके द्वितीयोऽङ्कः॥ २॥

-※-

# * मृच्छकटिकात् *

## सन्धिच्छेद

विदूषकः— अपि निद्राति भवान् ?

चारुदत्तः— अथ किम् ?

इयं हि निद्रा नयनावलम्बिनी
ललाटदेशादुपसर्पतीव माम् ।
अदृश्यरूपा चपला जरेव या
मनुष्यसत्त्वं परिभूय वर्धते ॥ १ ॥

विदूषकः— तत्स्वपिवः । ( नाट्येन स्वपिति )

( ततः प्रविशति शर्विलकः । )

शर्विलकः—

कृत्वा शरीरपरिणाहसुखप्रवेशं
शिक्षाबलेन च बलेन च कर्ममार्गम् ।
गच्छामि भूमिपरिसर्पणघृष्टपार्श्वो-
निर्मुच्यमान इव जीर्णतनुर्भुजङ्गः ॥ २ ॥

( नभोऽवलोक्य सहर्षम् । ) अये, कथमस्तमुपगच्छति स भगवान्मृगाङ्कः ?
तथा हि—

नृपतिपुरुषशङ्कितप्रचारं
परगृहदूषणनिश्चितैकवीरम् ।
घनपटलतमोनिरुद्धतारा
रजनिरियं जननीव संवृणोति ॥ ३ ॥

वृक्षवाटिकापरिसरे संधिं कृत्वा प्रविष्टोऽस्मि मध्यमकम्। तद्यावत् इदानीं चतुःशालकमपि दूषयामि। भोः,

कामं नीचमिदं वदन्तु पुरुषाः स्वप्ने च यद्वर्धते
विश्वस्तेषु च वञ्चनापरिभवश्चौर्यं न शौर्यं हि तत्।
स्वाधीना वचनीयतापि हि वरं बद्धो न सेवाञ्जलि-
र्मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्वं कृतो द्रौणिना ॥ ४ ॥

तत्कस्मिन्नुद्देशे संधिमुत्पादयामि ?

देशः को नु जलावसेकशिथिलो यस्मिन्न शब्दो भवे-
द्भित्तीनां च न दर्शनान्तरगतः संधिः करालो भवेत्।
क्षारक्षीणतया च लोष्टककृशं जीर्णं क्व हर्म्यं भवे-
त्कस्मिन्स्त्रीजनदर्शनं च न भवेत्स्यादर्थसिद्धिश्च मे ॥ ५ ॥

( भित्तिं परामृश्य। ) नित्याऽऽदित्यदर्शनोदकसेचनेन दूषितेयं भूमिः क्षारक्षीणा। मूषिकोत्करश्चेह। हन्त, सिद्धोऽयमर्थः। प्रथममेतत्स्कन्दपुत्राणां सिद्धिलक्षणम्। अत्र कर्मप्रारम्भे। कीदृशमिदानीं संधिमुत्पादयामि? इह खलु भगवता कनकशक्तिना चतुर्विधः संध्युपायो दर्शितः। तद्यथा—पक्वेष्टकानामाकर्षणम्, आमेष्टकानां छेदनम्, पिण्डमयानां सेचनम्, काष्ठमयानां पाटनमिति। तदत्र पक्वेष्टके इष्टिकाकर्षणम्। तत्र—

पद्मव्याकोशं भास्करं बालचन्द्रं
वापी विस्तीर्णं स्वस्तिकं पूर्णकुम्भम्।
तत्कस्मिन्देशे दर्शयाम्यात्मशिल्पं
दृष्ट्वा श्वो यं यद्विस्मयं यान्ति पौराः ॥ ६ ॥

तदत्र पक्वेष्टके पूर्णकुम्भ एव शोभते। तमुत्पादयामि।

अन्यासु भित्तिषु मया निशि पाटितासु
क्षारक्षतासु विषमासु च कल्पनासु।

दृष्ट्वा प्रभातसमये प्रतिवेशिवर्गो-
दोषांश्च मे वदति कर्मणि कौशलं च ॥ ७ ॥

नमो वरदाय कुमारकार्तिकेयाय, नमः कनकशक्तये ब्रह्मण्यदेवाय देवव्रताय, नमो भास्करनन्दिने, नमो योगाचार्याय यस्याहं प्रथमः शिष्यः। तेन च परितुष्टेन योगरोचना मे दत्ता।

अनया हि समालब्धं न मां द्रक्ष्यन्ति रक्षिणः।
शस्त्रं च पतितं गात्रे रुजं नोत्पादयिष्यति ॥ ८ ॥

( तथा करोति। ) धिक्कष्टम्। प्रमाणसूत्रं मे विस्मृतम्। ( विचिन्त्य। ) आं, इदं यज्ञोपवीतं प्रमाणसूत्रं भविष्यति। यज्ञोपवीतं हि नाम ब्राह्मणस्य महदुपकरणद्रव्यम्, विशेषतोऽस्मद्विधस्य। कुतः—

एतेन मापयति भित्तिषु कर्ममार्ग-
मेतेन मोचयति भूषणसंप्रयोगान्।
उद्घाटको भवति यन्त्रदृढे कपाटे
दष्टस्य कीटभुजगैः परिवेष्टनं च ॥ ९ ॥

मापयित्वा कर्म समारभे। ( तथा कृत्वाऽवलोक्य च। ) एकलोष्टावशेषोऽयं संधिः। धिक्कष्टम्। अहिना दष्टोऽस्मि। ( यज्ञोपवीतेनाङ्गुलीं बध्वा विषवेग नाटयति। चिकित्सां कृत्वा। ) स्वस्थोऽस्मि। ( पुनः कर्म कृत्वा दृष्ट्वा च। ) अये, ज्वलति प्रदीपः। तथा हि—

शिखा प्रदीपस्य सुवर्णपिञ्जरा
महीतले संधिमुखेन निर्गता।
विभाति पर्यन्ततमःसमावृता
सुवर्णरेखेव कषे निवेशिता ॥ १० ॥

( पुनः कर्म कृत्वा। ) समाप्तोऽयं संधिः। भवतु। प्रविशामि। अथवा न तावत्प्रविशामि। प्रतिपुरुषं निवेशयामि। ( तथा कृत्वा। ) अये, न कश्चित्। नमः कार्तिकेयाय। ( प्रविश्य दृष्ट्वा च। अये, पुरुष-

द्वयं सुप्तम्। भवतु। आत्मरक्षार्थं द्वारमुद्घाटयामि। कथं, जीर्णत्वाद्गृहस्य विरौति कपाटम्। तद्यावत्सलिलमन्वेषयामि। क्व नु खलु सलिलं भविष्यति? (इतस्ततो दृष्ट्वा सलिलं गृहीत्वा क्षिपन्सशङ्कम्।) मा तावद्भूमौ पतच्छब्दमुत्पादयेत्। भवतु। एवं तावत्। (पृष्ठेन प्रतीच्छ्य कपाटमुद्घाट्य।) एवं तावत्। इदानीं परीक्षे किं लक्ष्यसुप्तम्, उत परमार्थसुप्तमिदं द्वयम्? तथा हि—

निःश्वासोऽस्य न शङ्कितः सुविशदस्तुल्यान्तरं वर्तते
दृष्टिर्गाढनिमीलिता न विकला नाभ्यन्तरे चञ्चला।
गात्रं स्रस्तशरीरसंधिशिथिलं शय्याप्रमाणाधिकं
दीपं चापि न मर्षयेदभिमुखं स्याल्लक्ष्यसुप्तं यदि॥ ११॥

(समन्तादवलोक्य।) अये, कथं मृदङ्गः? अयं दर्दुरः। अयं पणवः। इयमपि वीणा। एते वंशाः। अमी पुस्तकाः। कथं नाट्याचार्यस्य गृहमिदम्? अथवा भवनप्रत्ययात्प्रविष्टोऽस्मि। तत्किं परमार्थदरिद्रोऽयम्, उत राजभयाच्चौरभयाद्वा भूमिष्ठं द्रव्यं धारयति? तन्ममापि नाम शर्विलकस्य भूमिष्ठं द्रव्यम्? भवतु बीजं प्रक्षिपामि। (तथा कृत्वा।) निक्षिप्तं बीजं न क्वचित्स्फारीभवति। अये, परमार्थदरिद्रोऽयम्। भवतु। गच्छामि।

विदूषकः—(उत्स्वप्नायते।) भो वयस्य! संधिरिव दृश्यते। चौरमिव पश्यामि। तद्गृह्णातु भवानिदं सुवर्णभाण्डम्।

शर्विलकः—किं नु खल्वयमिह मां प्रविष्टं ज्ञात्वा दरिद्रोऽस्मीत्युपहसति? तत्किं व्यापादयामि, उत लघुत्वादुत्स्वप्नायते? (दृष्ट्वा।) अये, जर्जरस्नानशाटीनिबद्धं दीपप्रभयोद्दीपितं सत्यमेवैतदलंकरणभाण्डम्। भवतु। गृह्णामि। अथवा न युक्तं तुल्यावस्थं कुलपुत्रजनं पीडयितुम्। तद्गच्छामि।

विदूषकः—भो वयस्य ! शापितोऽसि गोब्राह्मणकाम्यया, यद्येतत् सुवर्णभाण्डं न गृह्णासि।

शर्विलकः—अनतिक्रमणीया भगवती गोकाम्या ब्राह्मणकाम्या च । तद्गृह्णामि । अथवा ज्वलति प्रदीपः । अस्ति च मया प्रदीपनिर्वापणार्थमाग्नेयः कीटो धार्यते। तं तावत्प्रवेशयामि । तस्यायं देशकालः । एष मुक्तो मया कीटो यात्वेवास्य दीपस्योपरि मण्डलैर्विचित्रैर्विचरितुम्। एष पक्षद्वयानिलेन निर्वापितो भद्रपीठेन। धिक्कृतमन्धकारम् । अथवा मयाप्यस्मद्ब्राह्मणकुलेन। धिक्कृतमन्धकारम् । अहं हि चतुर्वेदविदोऽप्रतिग्राहकस्य पुत्रः शर्विलको नाम ब्राह्मणो गणिकामदनिकार्थमकार्यमनुतिष्ठामि । इदानीं करोमि ब्राह्मणस्य प्रणयम् । ( इति जिघृक्षति । )

विदूषकः— भो वयस्य ! शीतलस्तेऽग्रहस्तः ।

शर्विलकः— धिक्प्रमादः । सलिलसंपर्काच्छीतलो मेऽग्रहस्तः । भवतु । कक्षयोर्हस्तं प्रक्षिपामि । ( नाट्येन सव्यहस्तमुष्णीकृत्य गृह्णाति । )

विदूषकः— गृहीतम् ?

शर्विलकः—अनतिक्रमणीयोऽयं ब्राह्मणप्रणयः । तद्गृहीतम् ।

विदूषकः - इदानीं विक्रीतपण्य इव वणिक् अहं सुखं स्वप्स्यामि ।

शर्विलकः—महाब्राह्मण ! स्वपिहि वर्षशतम्। कष्टम्। एवं मदनिकागणिकार्थे ब्राह्मणकुलं तमसि पातितम्। अथवा आत्मा पातितः ।

धिगस्तु खलु दारिद्र्यमनिर्वेदितपौरुषम् ।
यदेतद्गर्हितं कर्म निन्दामि च करोमि च ॥ १२ ॥

तद्यावन्मदनिकाया निष्क्रयणार्थं वसन्तसेनागृहं गच्छामि । ( परिक्रम्यावलोक्य च । ) अये, पदशब्द इव । मा नाम रक्षिणः । भवतु । स्तम्भीभूत्वा तिष्ठामि । अथवा ममापि नाम शर्विलकस्य रक्षिणः ? योऽहं—

मार्जारः क्रमणे, मृगः प्रसरणे, श्येनो ग्रहालुञ्चने,
सुप्तासुप्तमनुष्यवीर्यतुलने श्वा, सर्पणे पन्नगः ।
माया रूपशरीरवेशरचने, वाग् देशभाषान्तरे,
दीपो रात्रिषु, संकटेषु डुडुभो, वाजी स्थले, नौर्जले ॥ १३ ॥

अपि च ।

भुजग इव गतौ, गिरिः स्थिरत्वे
पतगपतेः परिसर्पणे च तुल्यः ।
शश इव भुवनावलोकनेऽहं
वृक इव च ग्रहणे, बले च सिंहः ॥ १४ ॥

( प्रविश्य )

रदनिका—हा धिक् हा धिक् । बहिर्द्वारशालायां प्रसुप्तो वर्धमानकः । सोऽप्यत्र न दृश्यते । भवतु । आर्यमैत्रेयमाह्वयामि । ( इतिपरिक्रामति )

शर्विलकः—( रदनिकां हन्तुमिच्छति । निरूप्य । ) कथं स्त्री ? भवतु । गच्छामि । ( इति निष्क्रान्तः । )

रदनिका—हा धिक् हा धिक् । अस्माकं गृहे संधिं कर्तयित्वा चौरो निष्क्रामति । भवतु । मैत्रेयं गत्वा प्रबोधयामि । आर्यमैत्रेय ! उत्तिष्ठ उत्तिष्ठ । अस्माकं गेहे संधिं कर्तयित्वा चौरो निष्क्रान्तः ।

विदूषकः — आः दास्याः पुत्रिके ! किं भणसि—'चोरं कर्तयित्वा संधिर्निष्क्रान्तः ?

रदनिका —हताश ! अलं परिहासेन । किं न प्रेक्षसे एतत् ?

विदूषकः— आः दास्याः पुत्रिके ! किं भणसि–'द्वितीयमिव द्वारमुद्घाटितम्' इति । भो वयस्य चारुदत्त ! उत्तिष्ठोत्तिष्ठ । अस्माकं गेहे संधिं दत्त्वा चौरो निष्क्रान्तः ।

चारुदत्तः—भवतु । भोः, अलं परिहासेन ।

विदूषकः—भो, न परिहासः। प्रेक्षतां भवान्।

चारुदत्तः—कस्मिन्नुद्देशे ?

विदूषकः—भोः, एषः।

चारुदत्तः—( विलोक्य। ) अहो दर्शनीयोऽयं संधिः।

उपरितलनिपातितेष्टकोऽयं
शिरसि तनुर्विपुलश्च मध्यदेशे।
असदृशजनसंप्रयोगभीरो-
र्हृदयमिव स्फुटितं महागृहस्य॥ १५॥

कथमस्मिन्नपि कर्मणि कुशलता ?

( मृच्छकटिकस्य तृतीयाङ्कात् )



## अभिज्ञान शाकुन्तलात्

### प्रातः काल वर्णनम्

( ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः )

शिष्यः—वेलोपलक्षणार्थमादिष्टोस्मि तत्र भवता, प्रवासात् प्रतिनिवृत्तेन कण्वेन, तन्निर्गत्याऽवलोकयामि, कियदवशिष्टं रजन्याइति । ( परिक्रम्याऽवलोक्य च ) हन्त, प्रभातप्राया रजनी । तथाहि—

यात्येकतोऽस्तशिखरं पतिरोषधीनां
आविष्कृताऽरुणपुरस्सर एकतोऽर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवैष दशान्तरेषु ॥ १ ॥

अपिच—अन्तर्हिते शशिनि सैव कुमुद्वतीयं
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनेन
दुःखानि नूनमतिमात्र सुदुःसहानि ॥ २ ॥
कर्कन्धूनामुपरितुहिनं रञ्जयत्यग्रसन्ध्या
दार्भं मुञ्चत्युटजपटलं वीतनिद्रोमयूरः ।
वेदिप्रान्तात्खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः ॥ ३ ॥

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षयिततमसा मध्यमं धाम विष्णोः ।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखैः
अत्यारूढि र्भवति महतामप्यपभ्रंशनिष्ठा ॥ ४ ॥

यावदुपस्थितां होमवेलां गुरवे निवेदयामि ॥

( इतिनिष्क्रान्तः )

( अभिज्ञान शाकुन्तलस्यचतुर्थाङ्कात् । )

# सुभाषितानि

## अन्योक्तयः

### साधवः

उपरि करवालधाराऽऽकाराः क्रूरा भुजङ्गमपुंगवात् ।
अन्तः साक्षाद् द्राक्षादीक्षागुरवो जयन्ति केऽपि जनाः ॥ १ ॥

### आम्रः

पृष्टाः खलु परपुष्टाः परितो दृष्टाश्च विटपिनः सर्वे ।
माकन्द ! न प्रपेदे मधुपेन तवोपमा जगति ॥ २ ॥

### कूपः

नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः
अत्यन्तसरसहृदयो यतः परेषां गुण ग्रहीतासि ॥ ३ ॥

### कोकिलः

तावत् कोकिल ! विरसान्यापय दिवसान् वनान्तरे निवसन् ।
यावन् मिलदलिमालः कोऽपि रसालः समुल्लसति ॥ ४ ॥

### चन्दनम्

पाटीर ! तव पटीयान्कः परीपाटी मिमामुरीकर्तुम् ।
यत् पिषतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् ॥ ५ ॥

### भ्रमरः

येनाऽमन्दमरन्दे दलदरविन्दे दिनान्यनायिषत ।
कुटजे खलु तेनेहा तेने हा मधुकरेण कथम् ॥ ६ ॥

### मेघः

नापेक्षा न च दाक्षिण्यं, न प्रीति र्न च संगतिः ।
तथापि हरते तापं, लोकाना मुन्नतो घनः ॥ ७ ॥

## मेघः

शृण्वन् पुरः परुषगर्जितमस्य हन्त,
रे पान्थ ! विह्वलमना न मनागपि स्याः ।
विश्वार्तिवारणसमर्पितजीवनोऽयम्,
नाकर्णितः किमु सखे ! भवताम्बुवाहः ॥ ८ ॥

आरामाधिपतिर्विवेकविकलो नूनं रसा नीरसा,
वात्याभिः परुषीकृता दशदिशश्चण्डातपो दुःसहः ।
एवं धन्वनि चम्पकस्य सकले संहारहेतावपि,
त्वं सिञ्चन्नमृतेन तोयद ! कुतोऽप्याविष्कृतो वेधसा ॥ ९ ॥

ग्रीष्मे भीष्मतरैः करैर्दिनकृता दग्धोऽपि यश्चातकः
त्वां ध्यायन् घन ! वासरान् कथमपि द्राघीयसो नीतवान् ।
दैवाल्लोचनगोचरेण भवता तस्मिन्निदानीं यदि,
स्वीचक्रे करकानिपातनकृपा, तत् कं प्रति ब्रूमहे ॥ १० ॥

( पंडितराजस्य जगन्नाथस्य )

## कमलिनी

कमलिनि ! मलिनीकरोषि चेतः,
किमिति बकैरवहेलितानभिज्ञैः ।
परिणतमकरन्दमार्मिकास्ते,
जगति भवन्तु चिरायुषो मिलिन्दाः ॥ ११ ॥

## कमलम्

अयि दलदरविन्द ! स्पन्दमानं मरन्दम्,
तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गाः ।
दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्,
परिमलमयमन्यो बान्धवो गन्धवाहः ॥ १२ ॥

### सिंहः

न यत्र स्थेमानं दधुरतिभयभ्रान्तनयना-
गलद्दानोद्रेकभ्रमदलिकदम्बा करटिनः ।
लुठन्मुक्ताभारे भवति परलोकं गतवतो-
हरेरद्य द्वारे शिव शिव शिवानां कलकलः ॥ १३ ॥

### हंसः

पुरा सरसि मानसे विकचसारसाऽलिस्खल-
त्परागसुरभीकृते पयसि यस्य यातं वयः ।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले,
मरालकुलनायकः कथय रे कथं वर्त्तताम् ॥ १४ ॥

### गिरितरुः

मूलं स्थूल मतीवबन्धनदृढं शाखाः शतं मांसला-
वासो दुर्गमहीधरे तरुपते ! कुत्राऽस्ति भीतिस्तव ।
एकः किंतु मनागयं जनयति स्वान्ते ममाधिज्वरम्,
ज्वालालीवलयीभवन्नकरुणो दावानलो घस्मरः ॥ १५ ॥

### मार्गसरः

यातेमय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां,
गन्ता कं प्रति पान्थसंततिरसौ संतापमाला ऽऽकुला ।
एवं यस्य निरन्तराधिपटलै र्नित्यं वपुः क्षीयते,
धन्यं जीवनमस्य मार्गसरसो धिग्वारिधीनां जनुः ॥ १६ ॥

## सज्जन प्रशंसा

विवेकः सह संगत्या विनयो विद्यया सह ।
प्रभुत्वं प्रश्रयोपेतं चिह्न मेतन्महात्मनाम् ॥ १७ ॥
सज्जन एव हि विद्या शोभायै भवति दुर्जने मोघा ।
न विदूरदर्शनतया कैश्चिदुपादीयते गृध्रः ॥ १८ ॥

भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य ।
वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्योतः ॥ १९ ॥
( सुबन्धोः )

अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः ।
हेम्नः कठिनस्यापि, द्रवणोपायोऽस्ति न तृणानाम् ॥ २० ॥
विषमगता अपि न बुधाः परिभवमिश्रां श्रियं हि वाञ्छन्ति ।
न पिबंति भौममम्भः, सरजसमिति चातका एते ॥ २१ ॥
साप्तपदीनं सख्यं भवेत् प्रकृत्या विशुद्धचित्तानाम् ।
किमुतान्योन्यगुणकथा विस्रम्भनिबद्धभावानाम् ॥ २२ ॥
स्पृहणीयाः कस्य न ते सुमतेः सरलाशया महात्मानः ।
त्रयमपि येषां सदृशं हृदयं वचनं तथाचारः ॥ २३ ॥
दाता न दापयति दापयिता न दत्ते,
यो दानदापनपरो मधुरं न वक्ति ।
दानं न दापनमथो मधुरा च वाणी,
त्रीण्यप्यमूनि खलु सत्पुरुषे वसन्ति ॥ २४ ॥
प्रियप्रायावृत्तिर्विनयमधुरो वाचिनियमः ।
प्रकृत्या कल्याणी मति रनवगीतः परिचयः ।
पुरो वा पश्चाद् वा तदिदमविपर्यासितरसं
रहस्यं साधूना मनुपधि विशुद्धं विजयते ॥ २५ ॥
( भवभूतेः )

स्वाम्ये। पेशलता, गुणे प्रणयिता, हर्षे निरुत्सेकिता,
पत्रे संवृतता श्रुते सुमतिता वित्तोदये त्यागिता ।
साधौ सादरता खले विमुखता पापे परं भीरुता,
दुःखे क्लेशसहिष्णुता च महतां कल्याणमाकांक्षति ॥ २६ ॥

## दान प्रशंसा

मीयतां कथमभीप्सितमेषां दीयतां द्रुतमयाचितमेव ।
तं धिगस्तु कलयन्नपि वाञ्छामर्थिवागवसरं सहते यः ॥ २७ ॥

## उदार प्रशंसा

नाक्षराणि पठता किमपाठि पाठितोऽपि किमु विस्मृत एव ।
इत्थमर्थिजनसंशयदोलाखेलनं खलु चकार नकारः ॥ २८ ॥

## वाग्मि प्रशंसा

तद्वक्ता सदसि ब्रवीतु वचनं यच्छृण्वतां चेतसः,
प्रोल्लासं रसपूर्ण श्रवणयो रक्ष्णो विकास श्रियम् ।
क्षुन्निद्राश्रमदुःखकालगतिहृत् कार्यान्तरप्रस्मृतिम्,
प्रोत्कण्ठामनिशं श्रुतौ वितनुते, शोकं विरामादपि ॥ २६ ॥

## सुकवि प्रशंसा

सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे ।
उत्पादका न बहवः कवयः शरभा इव ॥ ३० ॥
(बाणभट्टस्य)

## विनय प्रशंसा

तिष्ठतां तपसि पुण्यमासजन् संपदोऽनुगुणयन् सुखैषिणाम् ।
योगिनां परिणमन् विमुक्तये केन मास्तु विनयः सतां प्रियः ॥ ३१ ॥
(भारवेः)

## धननिन्दा ।

लभेद्यदयुतं धनं तदधनं धनं यद्यपि
लभेत नियुतं धनं निधनमेव तज्जायते ।
तथा धनपरार्धकं तदपि भावहीनात्मकं
यदक्षर पदद्वयान्तरगतं धनं तद्धनम् ॥ ३२ ॥

अर्जुनीयति यदर्जने जनो मर्जनीयजनतर्जनादिभिः ।
मङ्क्षु नश्यति चिराय संचिता वञ्चिता जगति के न संपदा ॥३३॥

## याचकनिन्दा

द्वारे द्वारे परेषा मविरलमटति द्वारपालैः करालैः
दृष्टो योऽप्याहतः सन् रणति गणयति स्वापमानं तु नैव ।

क्षन्तुं शक्नोति नान्यं स्वमदुदर्शमितराऽऽगार मप्याश्रयन्तं
श्राम्यत्यात्मोदरार्थे कथमहह शुना नो समो याचकः स्यात् ॥ ३४ ॥

## कृतघ्ननिन्दा

शोकं मा कुरु कुक्कुर ! सत्वेष्वहमधम इति मुधा साधो !
कष्टादपि कष्टतरं दृष्ट्वा श्वानं कृतघ्ननामानम् ॥ ३५ ॥

## दुर्जन निन्दा

अकारणाऽऽविष्कृतवैरदारुणात्,
असज्जनात् कस्य भयं न जायते ।
विषं महाहेरिव यस्य दुर्वचः,
सुदुःसहं संनिहितं सदा मुखे ॥ ३६ ॥

( बाणस्य )

## उदर पूरण दूषणम्

कंधरां समपहाय कं धरां प्राप्य संयति जहास कस्यचित् ।
मां किलानमयतः स्वपूर्तये दुर्भरात्कि मुदराद्वियोगतः ॥ ३७ ॥

## जरावर्णनम्

यममिव करधृतदण्डं हरिमिव सगदं शशाङ्कमिव वक्रम् ।
शिवमिव च विरूपाक्षं जरा करोत्यकृतपुण्यमपि ॥ ३८ ॥

## दैवाख्यानम्

आहारे शुचिता ध्वनौ मधुरता वाचालता माधवे,
बन्धौ निर्ममता जनेषु निरता नीडे पराधीनता ।
एतैरेव गुणैर्युताः परभृतास्त्यक्ताः किमेते जनाः,
वन्दन्ते खलु खञ्जनं कृमिभुजं चित्रा गतिः कर्मणाम् ॥ ३९ ॥

---

## सामान्यनीतिः

परोऽवजानाति यदज्ञताजड-
स्तदुन्नतानां न विहन्ति धीरताम् ।
समान वीर्याऽन्वयपौरुषेषु यः
करोत्यतिक्रान्ति मसौ तिरस्क्रिया ॥ ४० ॥

यदाविगृह्णाति हतं तदा यशः
करोति मैत्रीमथ दूषिता गुणाः ।
स्थितिं समीक्ष्योभयथा परीक्षकः,
करोत्यवज्ञोपहतं पृथग्जनम् ॥ ४१ ॥

स्तुवंति गुर्वीमभिधेयसंपदं
विशुद्धि मुक्तेरपरे विपश्चितः ।
इतिस्थितायां प्रति पूरुषं रुचौ,
सुदुर्लभाः सर्वमनोरमा गिरः ॥ ४२ ॥

कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ४३ ॥

( कालिदासस्य )

आत्मारामा विहितरतयो निर्विकल्पे समाधौ,
ज्ञानोत्सेकाद् विघटिततमोग्रन्थयः सत्वनिष्ठाः ।
यंवीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥ ४४ ॥

( भट्टनारायणस्य )

लघौलघावेव पुरःसरे बुधै-
र्विधेय मुक्तेजनमात्मतेजसः ।
तृणे तृणेऽपि ज्वलनः खलुज्वलन्
क्रमात् करोपद्रुमकाण्डमण्डलम् ॥ ४५ ॥

( श्रीहर्षस्य )

विद्वज्जनसंपर्को नष्टेष्टज्ञातिदर्शनाभ्युदयः ।
कस्य न सुखाय भवने भवति महानर्थलाभश्च ॥ ४६ ॥

( बाणभट्टस्य )

मद्वाणि ! मा कुरु विषाद मनादरेण,
मात्सर्य मग्नमनसां सहसा खलानाम् ।
काव्यारविन्दमकरन्दमधुव्रतानाम् ,
आस्येषु धास्यतितमां कियतो विलासान् ॥ ४७ ॥

निर्माणे यदि,मार्मिकोऽसि नितरा मत्यन्तपाकद्रव-
न्मृद्वीकामधुमाधुरीमदपरीहारोद्धुराणां गिराम्।
काव्यं तर्हि सखे ! सुखेन कथय त्वं संमुखं मादृशाम्,
नो चेद्दुष्कृतमात्मना कृतमिव स्वान्ताद् बहिर्मा कृथाः ॥४८॥

तीर्थं किं हरिपादपद्मभजनं किं रत्न मच्छामतिः,
किं शास्त्रं श्रवणेन यस्य गलति द्वैताऽन्धकारोदयः।
किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे !
कः शत्रुर्वद खेददानकुशलो दुर्वासनानां चयः ॥ ४६ ॥

आ मूलाद्रत्नसानोर्मलयवलयितादा च कूलात् पयोधेः,
यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु।
मृद्वीका मध्यनिर्यन्मसृण रसभरी माधुरी भाग्यभाजाम्
वाचामाचार्यतायाः पद मनुभवितुं कोऽस्ति धन्योमदन्यः ॥ ५० ॥

वेदस्याऽध्ययनं कृतं, परिचितं शास्त्रं, पुराणं स्मृतं
सर्वं व्यर्थ मिदं, पदं न कमलाकान्तस्य चेत्कीर्त्तितम्।
उत्खातं, सदृशीकृतं, विरचितः सेकोऽम्भसा भूयसा
सर्वं निष्फल मालवालवलये क्षिप्तं न बीजं यदि ॥ ५१ ॥

( पंडित राजस्य )

इति सुभाषितानि

इति तृतीयो बिन्दुः